श्रीदिव्यसिंहमहापात्रविरचितः

# कालदीपः

## तेजन्या

सहितः





सम्पादकः

पण्डितश्रीकुलमणिमिश्रशर्मा

उत्कलसर्वकाराणां प्रत्नतत्त्वपर्यटनविभागानुकूल्येन

श्रीदिव्यसिंहमहापात्रविरचितः

# कालदीपः

धर्मशास्त्रसाहित्याचार्येण वेदशास्त्रिणा श्रीसदाशिवकेन्द्रीयसंस्कृत-
विद्यापीठस्य लब्धावसरधर्मशास्त्राध्यापकेन
श्रीकुलमणिमिश्रशर्मणा
विरचितया

## तेजन्या-

ख्यया टिप्पण्या सहितः

प्रकाशकः—
पण्डितश्रीकुलमणिमिश्रशर्मा
हाविलिगलि, पुरी



प्रथमसंस्करणम्—१०००
१९८२



मूल्यम्—रु० ६-७५

मुद्रकः—
श्रीनारायणप्रेस, पुरी

# विषयसूची

# ସୂଚୀପତ୍ର



—:o:—

# पुरोवाक्

भारतीयधार्मिकजनताया निरन्तरमपरिहार्या भारतीयसंस्कृतेश्च जीवनभूता व्रतोपवासादयः निमित्तं कालमासाद्य प्रवर्त्तन्त इति न कस्यापि वैमत्यम् । ततस्तन्निरूपणमत्यन्तमावश्यकम् । तदर्थं हि अनेके आचार्याः प्रायतन्त, बहून् निबन्धग्रन्थांश्च निर्ममिरे । तथाविधं कालनिरूपकं शास्त्रं केन सुगृहीतनाम्ना महात्मना कदाप्रभृति वा प्रारब्धमिति तत्रेतिहासो मौनव्रतमवलम्बते । तथापि प्रवाहपरम्परया स्मर्यमाणानामसु कालविषयक-निवन्धकारेषु संग्रहकारः शतानन्दः प्राचीनतम इति प्रतीयते । स हि एकादशशतकस्य अन्तिमसंवत्सरे भास्वतीनाम-ज्योतिषकरणग्रन्थं प्रणिनाय । उक्तं हि तेन तत्रैव—

"खखाश्ववेदो ४२०० पगते युगाब्दे दिव्योक्तितः श्रीपुरुषोत्तमस्य ।
श्रीमान् शतानन्द इतीदमाह सरस्वतीशङ्करयोस्तनूजः" ॥ इति

अनन्तरमागता माधवादयः स्वतेजसा दिश आलोकयन्तः परां प्रसिद्धि-मापन्नाः । अनेन क्रमेण कालनिबन्धाकाशे समागतोऽयं कालदीपकारः दिव्यसिंहमहापात्रः ।

ग्रन्थोकारोऽयं कालमाधवकारं तिथितत्त्वकारं च बहुधा स्मरति, क्वचित् क्वचिच्चानुसरति । निबन्धान्तरे श्राद्धदीपे शूलपाणिं दूषयति । विप्रमिश्र-विश्वनाथमिश्रौ श्राद्धप्रदीप–स्मृतिसारसंग्रहकारौ, विद्याकरनरसिंहवाजपेयिनौ नित्याचारपद्धति – नित्याचारप्रदीपकारावप्युदाहरति, तथा विज्ञानेश्वरं कल्पतरुकारं शुद्धिचन्द्रिकाकारं कालिदासचयिनिनं मुकुन्ददीक्षितं च स्मरति । संवत्सरप्रदीप-स्मृतिरत्नमाला – मदनपारिजातग्रन्थानप्युल्लिखतीति तेभ्योऽयं

नूनमर्वाचीनः । कृत्यकौमुदीकारमनुद्धरन्नपि कोजागरकृत्ये तमुद्धरन्तं रघुनन्दनमुद्धरन्नात्मानं ततोर्वाचीनं स्वयमेव वक्ति ।

कालसारकारं गदाधरराजगुरुं पण्डितसर्वस्वं वा न क्वचिदपि कीर्त्तयति, गदाधरश्च दिव्यसिंहस्य नाम अदर्शयन्नपि, दुर्गाष्टमीव्रते "प्रदोषः कर्मकाल:" इति, श्राद्धलक्षणे श्राद्धस्य दानरूपतायागरूपता चेति, पितृ-दशाहमध्ये मातृमरणे पित्रशौचेन शुद्धिरित्यादीनि बहूनि दिव्यसिंहमतानि खण्डयति । दिव्यसिंहश्च गदाधरमतविरोधं न दर्शयतीति नूनमयं गदाधरात् प्राचीनः । पण्डितसर्वस्वकारोपि तथैव महाष्टम्यां निशीथकालं दर्शयन् दिव्यसिंहादर्वाचीन एव ।

यद्यप्यस्मिन्नुत्कलदेशे कार्त्तिकपूर्णिमानन्तरं मार्गशिरमासमारभ्य वर्षारम्भसमाचारः, मार्गशिरमासस्य अग्रहायणसंज्ञा तथा मार्गशीर्ष-कृष्णाष्टम्याः प्रथमाष्टमीति संज्ञापि प्रसिद्धा, तदनुग्राहकं—

"मार्गशीर्षस्य मासस्य प्रारम्भे प्रतिपद्यपि ।
नवसंवत्सरारम्भो देवैः कृतयुगे कृतः" इति

ब्रह्मपुराणवचन(कल्पतरु नियत४३१)मप्युपलभ्यते तथापि माधवादीननुसृत्य सृष्ट्यारम्भतिथिं चैत्रशुक्लप्रतिपदमारभ्य ग्रन्थकृता कालनिर्णयः कृतः ।

अयमेव दिव्यसिंहः महापात्रोपाधिकः वत्ससगोत्रीयः श्रीकृष्ण-भवानीशङ्करोपासक आसीत् । अनेन श्रीपुरुषोत्तमक्षेत्रसमीपवर्त्ति-विश्वनाथ-पुरशासनं स्वजन्मना अलंकृतमित्यनुमीयते । तत्र हि वत्ससानां प्रोक्त देवत्रयस्य च प्रतिष्ठानम् । वत्ससगोत्रीयाः केचन ब्राह्मणाः कुलपरम्परया आचार्योपाधिका आसन् । कविडिण्डिमजीवदेवाचार्यः तत्पिता त्रिलोचन-देवाचार्यश्चेत्यादयस्तद्वंशीया राजसम्मानिता आसन् । कालक्रमेण ते सामन्तोपाधिं महापात्रपदवीं च लब्धवन्तः । तस्यैव विख्यातवंशस्यायं कालदीपकारः दिव्यसिंहः भवेदेव । अन्यथा अस्य सिद्धान्तः जनाना-मादरणीयो न भवेत् । अस्य ग्रन्थस्य प्रसारोऽपि न स्यात् । यद्यप्ययं

कालदीपः निवन्धेषु लघिष्ठस्तथापि बह्वादरेण उत्कलवासिभिः गृहे गृहे संस्थापित आसीत् । तेन ग्रन्थस्य ग्रन्थकारस्य च प्रतिष्ठा अनुमेया । एतेन हेतुना एतस्य पुरातनस्य ग्रन्थरत्नस्य समुद्धाराय तालपत्रपुस्तकलिखन-पठनपराङ्मुखानां जनानां सुखपठनाय च चिरपोषितो मेऽभिलाषः अद्य सफलतामेति ।

अत्र कालदीपे संयोजिता मे तेजनी क्वचिदस्फुटार्थं स्फुटीकरोति, क्वचित् संक्षिप्तार्थं बर्द्धयति, क्वचिच्च ग्रन्थकारसम्मतमपि धर्मविरुद्धं खण्डयति, यथा हि कार्त्तिकादिमासव्रतेषु स्वल्पकालव्यापिन्यां पूर्णिमायां हविष्यभोजनस्य हविष्येतरभोजननिवृत्तिरूपत्वा "निषेधः कालमात्रके" इति हविष्याकरणे न व्रतहानिरिति ग्रन्थकारमतम् । किन्तु निषेधस्यात्र न निषेधरूपत्वमपितु व्रताङ्गत्वेन पर्य्युदासतेति हविष्याकरणे व्रतहानेः हविष्यं विधेयमिति मया प्रतिपादितम् ।

संस्कृतभाषानभिज्ञानामपि धार्मिककृत्येषु कालपरिज्ञानाय उत्कल-भाषयापि तेजनीसहितस्य मूलग्रन्थस्य सारार्थोऽत्र निवेशितः ।

अस्यैव कालदीपस्य शुद्धतासम्पादनाय नवप्रतिलिपयो मया समाकलिताः । यथा—

(क) मम गुरुपादानां स्वर्गतानां प्रधानाचार्यपण्डित आनन्दमिश्रशर्ममहोदयानां गृहे वर्त्तमानं स्वर्गत - श्यामसुन्दरदाश–धर्मशास्त्राचार्येण तालपत्र-पुस्तकादुद्धृतं मयापि ततः समुद्धृतं हस्तलिखितं पुस्तकम् ।

(ख) मम जन्मस्थान–हलदिआभगवानपुर शासनस्थे गृहे वर्त्तमानं तालपत्र-पुस्तकम् ।

(ग) भुवनेश्वर म्युजियम् स्थितं ,, डि. एच्. १६८

(घ) पुरीश्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठस्थं,, ,, १२

(ङ) ,, ,, ,, ,, १३

(च) भुवनेश्वर म्युजियम् स्थितं ,, ,, ४७८

(छ) ,, ,, ,, ९२

(ज) ,, ,, ,, ४१

(झ) श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठस्थं,, ,, १४

ग्रन्थस्य प्राथमिकपाण्डुलेखे मम कनिष्ठाकन्या श्रीमती मिनतिः, पाण्डुलेखे पाठान्तरसंयोजने चायुष्मान् जयकृष्णमिश्रः, ग्रन्थसंवादने श्रीमान् किशोरचन्द्रमहापात्रः, सग्रहालये प्रतिलिपिप्राप्तौ सर्वकल्याणभाजनं श्रीनीलमणिमिश्रश्चेति छात्राः साहाय्यमकुर्वन् । तथा श्रीमुकुन्ददाशः मम दुर्लिखितमपि पठित्वा अक्षराणि समयोजयदिति सर्वानेतान् शुभाषिषा संवर्द्धयामि ।

अस्य ग्रन्थस्य मुद्रणाय उत्कलसर्वकारस्य भ्रमणप्रत्नतत्त्वविभागः न० PUBG-8/79, 5684/DTCA 21-4-80 पत्रेण द्विसहस्रं मुद्राः प्रतिश्रुत्य प्राथमिकतया ततः सार्द्धसहस्रं च प्रदाय ग्रन्थप्रकाशनमार्ग परिष्कृतवानिति सर्वथा धन्यवादार्हः ।

परिशेषे पाठकैः क्षमाधारैः सूरिभिश्च मत्कृतास्तुटयो मार्जनीया इति सम्प्रार्थ्य विरतोऽस्मीति शम् ।

विनीतो निवेदकः

**श्रीकुलमणिमिश्रशर्मा**

१४-१-१९८२

हाविलिगलि

पुरी

# कालदीपः

प्रणम्य देवं श्रीकृष्णं भवानीशङ्करावपि ।
तन्यते कालदीपोऽयं दिव्यसिंहेन धीमता[1] ॥

तिथिलक्षणम्

"तन्यन्ते[2] कलया यस्मात्तस्मात्तास्तिथयः स्मृताः ।"
"अमा षोडशभागेन देवि[A] प्रोक्ता महाकला ।
संस्थिता परमा माया देहिनां देहधारिणी ॥
अमादिपौर्णमास्यन्ता या एव शशिनः कलाः ।
तिथयस्ताः समाख्याताः षोडशैव वरानने ॥"(स्कन्द प्रभास १८ ३)

या महामाया आधारशक्तिरूपा देहिनां देहधारिणी संस्थिता[B], सा चन्द्रमण्डलस्य षोडशभागेन परिमिता चन्द्रदेहधारिण्यमानाम्नी महाकला प्रोक्ता, क्षयोदयरहितत्वान्नित्या[C] तिथिसंज्ञैव[3] । इतरा अपि

---

नीलाचलेश्वरं नत्वा लीलाकलितविग्रहम् ।
आरभे कालदीपस्य तेजनीं टिप्पणीमिमाम् ॥

1– धीमता इत्युक्तिः ग्रन्थकर्त्तुर्न गर्वद्योतिका अपितु ग्रन्थस्य बुद्धिपूर्वकप्रणीतत्वेन ग्राह्यत्वबोधिका ।

2– "तन्यन्त इतिवचनं सिद्धान्तशिरोमणेरिति कालमाधवे । प्रायेणात्र ग्रन्थकृता वचनानां मूलग्रन्थनिर्देशः न कृतः, मया तु कालमाधवकालसारयोराधारेण श्लोकपार्श्वे कुण्डलनामध्ये कृतः । येच मूलग्रन्थेषु लब्धास्तेषां श्लोकाद्यङ्का अपि प्रदत्ताः ।

3– प्रथमादिकला यथा क्षयोदययोगेन तिथिसंज्ञाप्रयोजिका भवन्ति अमाकला तु न तथा, अपि तु सा कृष्णपञ्चदश्याः संज्ञा भवत्येव ।

---

पाठान्तरम् – A देवी इति क पु. देवी इति छ पु. । B–नास्ति ग, घ, देहकारिणीसंस्थिता–भ । C– अमातिथि– ख ।

पञ्चदश कला दिवसव्यवहारोपयोगिन्यः[1] क्षयोदयवत्यः प्रतिपदादि-पौर्णमास्यन्ताः पञ्चदश तिथयो भवन्ति, इति षोडशैव कलास्तिथयः षोडशेति । एवं प्रथमादिकलाः क्रियोपलक्षिताः [A]कालविशेषाः प्रतिपदादिशब्देनाभिधीयन्ते ।

## तिथिस्वरूपम्

**खर्वी दर्पस्तथा हिंस्र[B]स्त्रिविधं तिथिलक्षणम् ।** (गर्गः)
**खर्वी नाम तिथेः साम्यं दर्पा वृद्धिः प्रकीर्त्तिता ॥**
**हिंस्रः स्यात् क्षय इत्युक्तो[C] मुनिभिस्तिथिनिर्णये ॥**

तिथिश्च द्विविधा, सम्पूर्णा खण्डा चेति ।

**[2]“प्रतिपत् प्रभृतयः सर्वा उदयादो[D]दयाद्रवेः ।**
**सम्पूर्णा इति विख्याता हरिवासरवर्जिताः ॥** (स्कन्दपु.)

हरिवासर- एकादशी । तत्रारुणोदयेऽपि[E] दशमीसत्त्वे वेधो विचारित इति ।

---

1- अद्य प्रतिपत् श्वो द्वितीया इत्यादिप्रकारेण दिवससंज्ञाप्रयोजिका इत्यर्थः । तथाहि सूर्योदयकाले या तिथिर्भवति तत्तिथिनाम्ना तदहोरात्रमभिधीयते । यदा वृद्धिवशात् तिथिः सूर्योदयद्वयं व्याप्नोति तदा अहोरात्रद्वयमपि तत्तिथिनाम्ना कीर्त्त्यते । यदा तु क्षयवशात् सूर्योदयानन्तरं प्रवृत्ता तिथिः परदिनसूर्योदयात् पूर्वं समाप्तिमेति तदा तत्तिथिनाम्ना न कस्यापि अहोरात्रस्याभिधानं भवति सूर्योदयकाले सत्ताभावात् अपितु सा तिथिः क्षीणा इत्युच्यते ।

2- रवेरुदयमारभ्य परदिने रवेरुदयात् अव्यवहितप्राक्कालपर्यन्तं वर्त्तमाना तिथिः पूर्णेति भावः । हरिवासरवर्जितत्वं एकादशीनिर्णये द्रष्टव्यम् । तत्र हि सम्पूर्णा त्यज्यते मलतिथिरेव गृह्यते इति ॥

### ତିଥିଲକ୍ଷଣ

ଚନ୍ଦ୍ରକଳାର ହ୍ରାସ ଓ ବୃଦ୍ଧିଦ୍ୱାରା ପ୍ରତିପଦାଦି ତିଥି ହୁଏ । ଯଥା— ପ୍ରଥମ କଳାର ହ୍ରାସରେ କୃଷ୍ଣ ପ୍ରତିପତ୍ ଓ ପ୍ରଥମ କଳାର ବୃଦ୍ଧିରେ ଶୁକ୍ଳ ପ୍ରତିପତ୍ । ସୂର୍ଯ୍ୟୋଦୟକୁ ଯେଉଁ ତିଥି ଥାଏ ସେହି ଅହୋରାତ୍ରକୁ ସେହି ତିଥି ନାମରେ ନାମିତ କରାଯାଇଥାଏ ଯଥା ଆଜି ପ୍ରତିପତ୍ କାଲି ଦ୍ୱିତୀୟା ଇତ୍ୟାଦି ।

---

पाठा.– A– कला– ग । B– हिंस्रात्रि छ घ । C– क्तं– ख, घ, छ, झ ।
D– ‘दु’ ख ङ छ झ । E– दयवेलायां– ग ।

"आदित्योदयवेलाया आ[A]रभ्य षष्टिनाडिकाः[1B] ।
या तिथिः सा तु शुद्धा स्यात् सार्वतिथ्यो ह्ययं विधिः ॥"

(नारदपु.)

"सर्वाह्ने[C]ताश्च तिथय उदयादोदयं स्थिताः ।
शुद्धा इति विनिश्चेयाः षष्टिनाड्यो[D] हि वै तिथिः ॥"

(सूर्यसिद्धान्तः)

या तु नोक्तलक्षणा सा खण्डतिथिः । तत्र सम्पूर्णायां शुद्धायां विधिनिषेधयोर्नास्ति सन्देहः । खण्डतिथौ तु विधिनिषेधव्यवस्था यथा—

"निमित्तं[2] कालमादाय वृत्तिर्विधिनिषेधयोः ।
विधिः पूज्यतिथौ तत्र निषेधः कालमात्रके ॥
तिथीनां पूज्यता नाम कर्मानुष्ठानयोग्यता ।
निषेधस्तु निवृत्त्यात्मा[3] कालमात्रमपेक्षते ॥"

(गार्ग्यः)

---

1– नाडिका–दण्डः । स च अहोरात्रस्य षष्टितमोभागः ।

2– निमित्तमिति वचनद्वयं गर्गस्येति कालमाधवे (८१) । वृद्धगार्ग्यस्येति समयप्रकाशे(पृ-१९) । कालः खलु कर्मसु प्रवर्त्तकत्वेन निमित्तं भवति । विधिनिषेधौ तु कालमाश्रित्य वर्त्तेते । इदं कर्त्तव्यमिति विधिः । इदं न कर्त्तव्यमिति निषेधः । तत्र पूज्यतिथौ कर्मानुष्ठानयोग्यत्वेन निरूपितायां तिथौ विधिः प्रवर्त्तते । कालमात्रके कर्मानुष्ठानयोग्यता-विरहिणि दिवसे अपि वर्त्तमाने अमावास्यादिकाले मत्स्यमांसादि-वर्जनरूपो निषेधः प्रवर्त्तते इति भावः ।

3– निवृत्त्यात्मा– निवृत्तिस्वरूपः न तु विधिरूप इत्यर्थः ।

---

पाठान्तरम्– A– मारभ्य–छ झ । B– नाडिका–ख । C– श्चै–छ । D– नाड्या–क ।

वृप्तिः पालनम् । तत्र विधिनिषेधयोरनुष्ठानाननुष्ठानरूपपालने कालस्य निमित्तत्वेनाभिधानात् । "अतः कालं प्रवक्ष्यामि निमित्तं कर्मणामिहेति" वचनाच्च[A] । एवं च सति खण्डतिथौ[1] पूज्यत्वं निर्णतव्यं भवति ।

"त्रिस[2]न्ध्यव्यापिनी या नु सैव पूज्या सदा तिथिः ।
न तत्र युग्मादरणमन्यत्र हरिवासरात् ।।" (पराशरः)
आसायं वर्त्तते या च सा तिथिः सर्वकर्मसु ।
योदयादेति मध्या ह्लमखण्डा सा तिथिः स्मृता ।।
खण्डाद्यथा व्रतारम्भं समाप्तिं चात्र वर्जयेत् ।
"ख[3]खण्डव्यापिमार्तण्डा स्यात् सूर्योदयगा तिथिः ।।
सा ह्यखण्डा व्रतानां स्यात्तत्रारम्भसमापने । " (मरीचिः)
"क[4]र्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः ।।

---

1) पूर्णतिथौ संशयाभावात् खण्डतिथावेव निर्णयस्यावश्यकत्वमिति तात्पर्यम् ।
2) त्रिसन्ध्यव्यापिनी— सूर्योदयात् सूर्योदयपर्यन्तं वर्त्तमाना तत्र न युग्मादरणं युग्माग्नियुगभूतानामित्यादिवचनानामनादरः । निःसन्देहं कर्म कर्त्तव्यमितिभावः ।
3) खखण्डेति– खम्–आकाशः । सूर्यस्य किंचिदाकाशोत्थानपर्यन्तं वर्त्तमाना तिथिः पूर्णेति भावः । एतेन अत्र अविद्यमानापि पूर्णता आरोप्यते ।
4) ह्लासवृद्धी– कृष्णशुक्लपक्षौ वा तिथिक्षयवृद्धी वा ।

ତିଥି ବ୍ୟାପ୍ତି ଓ ବିଧି ନିଷେଧ ବ୍ୟବସ୍ଥା

ତିଥିଗୁଡିକ ସୂର୍ଯ୍ୟୋଦୟଠାରୁ ପରଦିନ ଠିକ୍ ସୂର୍ଯ୍ୟୋଦୟପର୍ଯ୍ୟନ୍ତ ରହିଲେ ସମ୍ପୂର୍ଣ୍ଣ ବା ଶୁଦ୍ଧ । କମିଲେ ଖଣ୍ଡତିଥି ବୋଲନ୍ତି । ପୂର୍ଣ୍ଣ ତିଥିରେ ବିଧି ନିଷେଧ ବ୍ୟବସ୍ଥାରେ ସନ୍ଦେହ ରହେନାହିଁ । କିନ୍ତୁ ଖଣ୍ଡତିଥିରେ ନିର୍ଣ୍ଣୟ ଆବଶ୍ୟକ ।

ଯେଉଁ ତିଥି ଯେଉଁ ବ୍ରତୋପବାସାଦି ଅନୁଷ୍ଠାନ ନିମନ୍ତେ ଯୋଗ୍ୟ ବୋଲି ବିବେଚିତ ହୁଏ ସେହିଦିନସାରା ( ଉକ୍ତ ତିଥି ନ ଥିବା ସମୟରେ ମଧ୍ୟ ) ସେ କର୍ମ କରାଯାଇପାରିବ କିନ୍ତୁ ଯେଉଁ ତିଥିରେ ଯାହା ନିଷେଧ ଥିବ ତାହା ସେହି ତିଥି ଥିବା ପର୍ଯ୍ୟନ୍ତହିଁ ପାଳିତ ହେବ ।

---

पाठा.–A त्-क घ ।

तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् । " (वृद्धयाज्ञ)

'यस्मिन् काले तु यत् कर्म तत्कालव्यापिनी तिथिः ।। (स्कन्दपु.)

"आदित्योदयवेलायां याल्पापि हि तिथिर्भवेत् ।

सा पूर्णेत्येव मन्तव्या प्रभूता नोदयं विना ।। " (स्कन्दपु.)

उ[1]दये सा तिथिर्ग्राह्या विपरीता तु पैतृके । (देवलः)

उदितो यत्र मार्त्तण्डः खखण्डादतिवर्त्तते ।।

अखण्डा सा तिथिर्ग्राह्या स्नानदानव्रतादिषु ।

'व्रतोपवासस्नानादौ घटिकैका यदा भवेत् ।

सा तिथिः सकला ज्ञेया श्राद्धादौ त्वस्तगामिनी ।।(विष्णुधर्मोत्तरपु)

अत्र घटिका मुहूर्त्तं श्राद्धयोग्यकालानुरोधात् । इति कर्मकालव्याप्तिः समर्थ्यते ।

पक्ष[2]द्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम् ।

त्रिभिर्मुहूर्त्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः ।। (पैठीनसिः)

प[1]रेद्युरुदयानन्तरममावास्या त्रिमुहूर्त्ता चेत् सा[2] प्रतिपदं विध्यति । पू[3]र्वेद्युरस्तमयात् प्राक् द्वितीया त्रिमुहूर्त्ता चेत् सा[4] पूर्वां प्रतिपदं विध्यति । एवं सर्वत्र ।

---

१) उदये सा तिथिर्ग्राह्या इति दैवकर्मणि । पैतृके पितृकर्मणि श्राद्धादौ विपरीता-अस्तगामिनी ग्राह्या इति निष्कर्षः ।

२) पक्षद्वयेपीति । तत्र मुहूर्त्तत्रयं दिनमानस्य पञ्चमभागरूपम् । तेन दिनमानवृद्धौ मुहूर्त्तमानवृद्धिः । दिनमानह्रासे च मुहूर्त्तमानह्रासः तथा रात्रावपि ।

तदुक्तं विष्णुधर्मोत्तरे (१-७३-५-८) ।

ସାରାଂଶ

ତିଥି ସନ୍ଧ୍ୟାପର୍ଯ୍ୟନ୍ତ ଥିଲେ ବା ମଧ୍ୟାହ୍ନ ପର୍ଯ୍ୟନ୍ତ ଥିଲେ ବା ସୂର୍ଯ୍ୟୋଦୟକୁ ଥିଲେ ସେହିଦିନ ସେ ତିଥି ପୂର୍ଣ୍ଣମାନରେ ଅଛନ୍ତି ବୋଲି ଜାଣିବାକୁ ହେବ । ଏହିମତ୍ତ ସାରାଂଶ ବଚନ ଦ୍ୱାରା ଅପୂର୍ଣ୍ଣ ତିଥିକୁ ପୂର୍ଣ୍ଣବୋଲି ଗ୍ରହଣକରି ଅନୁଷ୍ଠାନ କରିବାକୁ ହେବ । ଏଥିରେ କର୍ମକାଳବ୍ୟାପ୍ତି ହିଁ ମୁଖ୍ୟ ।

---

पाठा.—1- पूर्वेद्युः-ख घ भ । 2- सा तिथिः ख ग भ । 3-परेद्युः-ख ग घ भ । 4- सापि- भ घ ।

मुहूर्त्तत्रितयं प्रातस्तावानेव तु सङ्गवः ।
मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णश्च तादृशः ॥
सायाह्नस्त्रिमुहूर्त्तः स्यात्स[1]र्वध[1]र्मबहिष्कृतः । (व्यासः)

एवं पञ्चधा विभागः । त्रेधा विभाग[2]स्तु स्मृतिष्वभिहितः ।

ऊ[2]र्ध्वं सूर्योदयात् प्रोक्तं मुहूर्त्तानां तु पञ्चकम् ।
पूर्वाह्णः, पञ्चक प्रोक्तो मध्याह्नस्तु ततः परम् ।
अपराह्णस्तथा प्रोक्तो मुहूर्त्तानां तु पञ्चकम् । इति । (स्कन्दपु.)

पञ्चधा विभागो[3] दिवसस्य कल्पतरुकारानन्तभट्टप्रभृतिबहुनिबन्धकारसम्मतत्वात् एतमेव पक्षमाश्रित्य व्यवस्था क्रियते ।

त्रेधाविभागपक्षस्तु "वासरस्य तृतीयेऽंशे नातिसन्ध्यासमीपत" इति छन्दोगपरिशि[4]ष्टकात्यायन-वचनात् अमावास्याश्राद्धादौ व्यवस्थितः ।

---

"उत्तरां तु यदा काष्ठां क्रमादाक्रमते रविः । तदा तथा भवेद्वृद्धिर्दिवसस्य महाभुज । दिवसश्च यदा राम वृद्धिं समधिगच्छति । तदाश्रितमुहूर्त्तानां ज्ञेया वृद्धिस्तदा तथा । दक्षिणां च यदा काष्ठां क्रमादाक्रमते रविः । दिवसस्य तदा हानिर्ज्ञातव्या नित्यमेव तु । क्षीयन्ते दिनहानौ तु तन्मुहूर्त्तास्तथैव च । रात्र्याश्रिताश्च वर्द्धन्ते रात्रिवृद्धौ तथा तथा" इति ।

१) तत्र सर्वधर्मबहिष्कृतः-स्नानदानादिसकलधर्मकृत्येषु अप्रशस्त इति यावत् । सर्वकर्मबहिष्कृत इति पाठे तु कर्मशब्दो विहितकर्मपरः ।

२) ऊर्ध्वं सूर्योदयादिति सूर्योदयस्यापि तत्रान्तर्भावः न तु सूर्योदयं वर्जयित्वा परम् इति निष्कर्षः ।

( ବୋଧ )

ସୂର୍ଯ୍ୟୋଦୟପରେ ଯେଉଁ ତିଥି ତିନମୁହୂର୍ତ୍ତ ଥାଏ ସେ ପରତିଥିକୁ ଗ୍ରହ କରେ ଓ ଠିକ୍ ସୂର୍ଯ୍ୟାସ୍ତ ପୂର୍ବରୁ ଯେଉଁ ତିଥି ତିନମୁହୂର୍ତ୍ତ ଥାଏ ସେ ତିଥି ପୂର୍ବ ତିଥିକୁ ଗ୍ରହ କରେ । ଦିବାଭାଗ ପ୍ରାତଃ, ସଙ୍ଗବ, ମଧ୍ୟାହ୍ନ, ଅପରାହ୍ଣ ଓ ସାୟାହ୍ନ ଏହିପରି ପାଞ୍ଚଭାଗରେ ବିଭକ୍ତ ଅଟେ । ତ୍ରିଧା (ପୂର୍ବାହ୍ଣ, ମଧ୍ୟାହ୍ନ ଓ ଅପରାହ୍ଣ) ବିଭାଗ ପକ୍ଷ କେବଳ ଅମାବାସ୍ୟା ଶ୍ରାଦ୍ଧ ପ୍ରଭୃତିରେ ପ୍ରଯୁଜ୍ୟ ।

---

पाठा.- 1) कर्म- ख ग घ । 2) गोऽपि- ग घ । 3) विभागपक्षस्य ख ग घ ।
4) ष्टे ख ।

निगमोक्तयुग्मवचनं यथा[1]—

युग्माग्नियुगभूतानां षण्मुन्योर्वसुरन्ध्रयोः ।
रुद्रेण द्वादशीयुक्ता चतुर्दश्या तु[2] पूर्णिमा ।।
प्रतिपद्य[3]प्यमावास्यातिथ्यो र्युग्मं महाफलम् ।
एतद् व्यस्तं महाघोरं हन्ति पुण्यं पुरा कृतम् ।।

युग्मं द्वितीया । अग्निस्तृतीया । युगं चतुर्थी । भूतं पञ्चमी । षट् षष्ठी । मुनिः सप्तमी । वसुरष्टमी । रन्ध्रं नवमी । रुद्र एकादशी । अत्र युग्मादिसप्तयुग्मेषु पूर्वतिथिरुत्तरविद्धा ग्राह्या । उत्तरा तु पूर्वविद्धेत्युक्तं भवति ।

द्वितीयातृतीययोः चतुर्थीपञ्चम्योः षष्ठीसप्तम्योरष्टमीनवम्योरेकादशीद्वादश्योश्चतुर्दशीपौर्णमास्योः प्रतिपदमावास्ययोश्च युग्मं मेलनं महाफलं तत्तिथिमा[4]त्रनिमित्तके कर्मणि म[1]हाफलम् । एतद् व्यस्तं युग्मादिविपरीतं प्रतिपद्द्वितीययोस्तृतीयाचतुर्थ्योरित्याद्योर्मेलनं म[2]हाघोरम् । अत्र युग्मादिसप्तयुग्मेषु पूर्वतिथिरु[5]त्तरविद्धा ग्राह्या उत्तरा तु पूर्वविद्धेत्युक्तं भवति ।

---

१) महाफलं- तत्तत्तिथिविधेये कर्मणि सम्पादिते महत् फलं लभ्यते इति भावः ।
२) महाघोरं- प्रत्यवायजनकत्वेन अत्यन्तभयङ्करमित्यर्थः ।

ଦ୍ୱିତୀୟାଯୁକ୍ତ ତୃତୀୟା ଓ ତୃତୀୟା ଦ୍ୱିତୀୟାଯୁକ୍ତ ହେବା ଶୁଭଦ । ସେହିପରି ୪ର୍ଥୀ ୫ମୀ ମଧ୍ୟରେ ୬ଷ୍ଠୀ ୭ମୀ ମଧ୍ୟରେ ୮ମୀ ୯ମୀ ମଧ୍ୟରେ ୧୧ଶୀ ୧୨ଶୀ ମଧ୍ୟରେ ୧୪ଶୀ ପୂର୍ଣ୍ଣିମା ମଧ୍ୟରେ ପ୍ରତିପଦା ଓ ଅମାବାସ୍ୟା ମଧ୍ୟରେ ଯୁଗ୍ମତା ରହିଛି । ଅର୍ଥାତ୍ ୪ର୍ଥୀ ୬ଷ୍ଠୀ ପ୍ରଭୃତି ପରବିଦ୍ଧ ହେବେ ଓ ୫ମୀ ୭ମୀ ପ୍ରଭୃତି ପୂର୍ବବିଦ୍ଧ ହେବେ ।

---

पाठा.- 1)तु- क । 2) च-ख । 3) दा- ग घ । गरुडे तु पुगभूतानीति पाठः १-१२८-१४ । 4) तत्तिथिमात्रके-ख । 5) उत्तरा- घ ङ । क ख पुस्तकयोः अत्रयुग्मादि" इति वाक्यं नास्ति ।

## अथोपवासनिर्णयः

उप[1]वासस्तु सर्वतिथिषु नारदीयेन दर्शितः ।

शुक्लान् वा यदि वा कृष्णान् प्रतिपत्प्रभृतीन् तिथीन् ।
उपोष्येत्र वलिं द[1]द्याद् विधिवदपरेऽहनि ।।
ब्राह्मणान् भोजयित्वा तु सर्वपापैः प्रमुच्यते । इति ।

उपवासस्याहोरात्रः कर्मकालः । तद्व्यापिनी ग्राह्या । तदसम्भवे खण्डतिथिर्ग्राह्या । सर्वत्र कर्मकालयुतायाः एव तिथेरनुष्ठानाङ्गत्व स्मृतिस्वभिप्रे[2]तम् । कर्मकालश्च द्विविधो मुख्यो गौणश्चेति । तिथिव्याप्तिश्च द्विविधा, स्वाभाविकतिथिव्याप्तिः सा[2]कल्यवचनापादित-तिथिव्याप्तिश्चेति । यदा तु प्रतिपत् खण्डतिथिः सती पूर्वोत्तरदिनयोर्दर्श-द्वितीयाभ्यां युज्यते तदा दर्शयुक्तायाः पूज्यत्वात् तत्रैवानुष्ठेयम् ।

पञ्चमी सप्तमी चैव दशमी च त्रयोदशी ।
प्रतिपन्नवमी चैव कर्त्तव्या सम्मुखी तिथिरिति । (पैठीनसिः)
"सम्मुखी नाम सायाह्नव्यापिनी दृश्यते यदा ।
प्रतिपत् सम्मुखी कार्या या भवेदापराह्णिकी । (स्कन्दपु.)
[3]प्रतिप[3]त् सैव विज्ञेया या भवेदापराह्णिकी ।
दैवं कर्म तथा ज्ञेयं पित्र्यं वा मनुरब्रवीत् ।। (व्यासः)

---

१) "उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह ।
उपवासः स विज्ञेयः सर्वभोगविवर्जित" इति उपवासशब्दार्थो विष्णुधर्मेऽभिहितः इति कालसारे ।

२) साकल्यवचनानि- "यां तिथिं समनुप्राप्य उदयं याति भास्करः ।
सा तिथिः सकला ज्ञेया स्नानदानव्रतादिषु" ।
इत्यादीनि देवलादिभिरुदाहृतानि वचनानि । एतादृशैर्वचनैः पारिभाषिकं साकल्यमापाद्यते ।

३) अत्र पित्र्यं वेति स्थाने "पैत्र्यं चेति मुद्रितकालमाधवपाठः ।

---

पाठा.- 1) दत्त्वा विधिना ह्यप ख ग ङ छ । 2) हितम्- क । 3) प्रतिपत्-सैवेति श्लोकार्द्ध नास्ति ङ ।

सायाह्नव्याप्तिवचनेन त्रिमुहूर्त्तवा[1]चको वेधोऽभि[2]धीयते ।
आपराह्णिकवचनेन ततोऽप्यधिकवेधः । तदोभ[1]यत्र शुक्लप्रतिपद्
पूर्वैवोपोष्या । कृष्णप्रतिपत्[3] परेद्युरुदयादूर्ध्वं त्रिमुहूर्त्ता ततोऽप्यधिका वा
स्यात्तदा सैवोपोष्या । "प्रतिपत् सद्वितीया स्यात्" इत्यापस्तम्बवचनात् ।
अन्य[4]था पूर्वेद्युरुपवास इति । अतएव माधवाचार्याः—

"शुक्लपक्षे दर्शविद्धा कृष्णे विद्धा द्वितीयया ।
उपोष्या प्रतिपच्छुक्ले मुख्या स्यादापराह्णिकी ॥
तदभावे तु सायाह्नव्यापिनी परिगृह्यताम् ।
अ[2]भावेऽपि प्रतिपदः संकल्पः प्रातरिष्यते ॥
तिथिच्छिन्नयामतोऽर्वाक् चेत्तिथ्यन्ते पारणं भवेत् ।
मुख्यतिथ्यन्तराये तु तिथिशेषोऽपि गृह्यताम् ॥
शुद्धा[3]धिका तु कृष्णाऽपि पूर्वा सम्पूर्णसम्भवात् ॥" इति ।
"प्रातः सन्ध्यां ततः कृत्वा सकल्प बुध आचरेत् ।
"गृ[4]हीत्वौदुम्बरं पात्रं वारिपूर्णमुदङ् मुखः ।
उपवासं तु गृह्णीयाद् यद् वा वार्येव धारयेत् ॥ (वराहपु.)

---

१) उभयत्र-आपराह्णिकव्याप्तिसायाह्नव्याप्तिवचनयोः ।

२) यत्र अपराह्णव्याप्ति सानाह्नव्याप्ति वा गृहीत्वा प्रतिपदि उपवासः क्रियते, तदा प्रातः अमावास्यायामपि प्रतिपदुपवासनिमित्तकः संकल्पो विधेयः । संकल्पस्य प्रातर्विधेयत्वात् । एवं सर्वत्र नक्तादिव्रतेषु द्वितीयादितिथिषु च यद्यपिज्योतिःशास्त्रानुसारेण तत्र प्रातः प्रतिपदादिस्तिथिर्नास्ति, तथापि स्मृतिशास्त्ररीत्या उपवासादिनिमित्तकः साकल्यवचनापादित प्रतिपदादिरस्त्येव ।

३) या तिथिः पूर्वदिने सम्पूर्णा षष्टिदण्डात्मिका परदिनेऽपि मलरूपे ण वर्त्तते सा तिथिः शुद्धाधिका इत्युच्यते ।

४) औदुम्बरं—ताम्रमयम् । महाभारतेऽपि "प्रगृह्यौदुम्बरं पात्रं तोयपूर्णमुदङ् मुखः । उपवासं तु गृह्णीयाद् यद्वा सङ्कल्पयेद्व्रतम् ।" अनु १२६-२० ।

---

पाठा. - 1) वचन-गघङ वचनोक्त- भ । 2) वि ख भ । 3) तु–खगङभ
4) अर्थः क ।

ताम्रपात्राभावे जलमा[1]त्रं गृहीत्वा संकल्पयेदित्यर्थः ।

मासपक्षतिथीनां च निमि[1]त्तानां च सर्वशः ।

उल्लेखनमकुर्वाणो [2]नरकं प्रतिपद्यते ॥ इति वचनात्

पौर्णमास्यमावास्ययोरपि पक्षोल्लेखः कार्यः ।

## एकभक्तनिर्णयः

प्रतिपद्येकभक्ताशी समाप्ते कपिलाप्रदः । (ब्रह्मपु.)

एकभक्तं त्रिविध, स्वतन्त्रमन्याङ्गमुपवासप्रतिनिधिरूपञ्चेति ।

"दिनार्धसमयेऽतीते भुज्यते नियमेन यत् ।

एकभक्तमिति प्रोक्तमतस्तस्माद्दिवैव तत् ॥ (स्कन्दपु.)

"दिनार्धसमयेऽतीते भुज्यते नियमेव यत् ।

एकभक्तमिति प्रोक्तं न्यूनं ग्रासत्रयेण तु[3] ॥ (देवलः)

अत्र दिनार्धस्य उपरि सार्धमुहूर्तपरिमितः कालः । पञ्चधाविभागे मध्याह्नस्यापर[2]भाग एकभक्तस्य मुख्यः कालः । दिनार्धेऽतीते सति समनन्तरभावित्वात् अस्तमयात् प्राचीनोऽवशिष्टो गौणः कालः दिवेत्यभ्यनुज्ञानात् । एवं व्य[3]वस्थिते सति मुख्यकालव्यापिनी तिथिर्ग्राह्या ।

"[4]मध्याह्नव्यापिनी ग्राह्या एकभक्ते सदा तिथिः ।" (पद्मपु.)

"उदये तूपवासस्य नक्तस्यास्तमये तिथिः ।

म[5]ध्याह्नव्यापिनी ग्राह्या [6]एकभक्ते सदा तिथिः । (बौधायनः)

---

१) निमितानां– वारनक्षत्रयोगलग्नकरणादीनां कालांशानाम् ।

२) अपरभागः– द्वितीयो भागः ।

३) व्यवस्थिते- गौणमुख्यरूपेण निर्णीते ।

ଉପବାସ ଦିନରେ ଶୁକ୍ଳ ପ୍ରତିପଦ୍ ଅମାବାସ୍ୟାଯୁକ୍ତା ଗ୍ରାହ୍ୟ ହୁଏ କିନ୍ତୁ ପ୍ରତିପଦା ସୂର୍ଯ୍ୟାସ୍ତ ପୂର୍ବରୁ ଥିବା ଆବଶ୍ୟକ । ଏପରି ସ୍ଥଳେ ସକାଳୁ ପ୍ରତିପଦା ନ ଥିଲେ ମଧ୍ୟ ସକାଳୁ ପ୍ରତିପଦା କହିତ ଉପବାସର ସଂକଳ୍ପ କରିବାକୁ ହେବ । ତହିଁରେ ମାସ ପକ୍ଷ ତିଥି ପ୍ରଭୃତିର ଉଲ୍ଲେଖ କରାଯିବ ।

---

पाठा.– 1) जलपात्रं- घ भ । 2) न तस्य फलभाग् भवेत्- खगघङछभ । 3) तत्- गघ । 4) नास्ति- क घ । 5) मध्याह्न इति पंक्तिः नास्ति- भ । 6) एकभक्तव्रते- ख ग घ ङ छ ।

अत्र निर्णेतव्यो विषयः षोढा[1] भिद्यते । पूर्वेद्युरेव मध्याह्नव्याप्तिः[2] । अपरेद्युरेव तद्व्यापित्वम् । उभयत्र तद्व्यापित्वम् । नोभयत्र तद्व्यापित्वम् । उभयत्र साम्येन तदेकदेशव्यापित्वम् । उभयत्र वैषम्येण तदेकदेशव्यापित्वं चेति ।

तत्र प्रथमद्वितीययोर्मध्याह्नव्यापित्वस्यैव निर्णायकत्वम् । तृतीये पूर्वविद्धा ग्राह्या, मुख्यकालव्याप्तेः समत्वेऽपि गौणकालव्याप्तेरधिकत्वात् ।

चतुर्थेऽनेनैव न्यायेन उभयत्रमुख्यकालव्याप्तेरभावेऽपि गौणकालव्याप्तिलाभात् पूर्वविद्धैव । पञ्चमेऽप्ययमेव न्यायो योज्यः । षष्ठे तु यदा पूर्वेद्युः मध्याह्नैकदेशमधिकं व्याप्नोति तदानीं तदाधिक्यात् गौणकालव्याप्तेश्च पूर्वैव ग्राह्या । यदा तु परेद्युर्मध्याह्नैकदेशमधिकं व्याप्नोति तदानीं गौणकालव्याप्त्यभावेऽपि मुख्यकालव्याप्त्याधिक्यानुसारेण परैव ग्राह्या । अन्याङ्गैकभक्ते तु—

"पूजाव्रतेषु सर्वत्र मध्याह्नव्यापिनी तिथिः ।"

"मध्याह्ने पूजयेन्नृप" इत्यादि शास्त्रैरङ्गिनः पूजाविधेः मध्याह्ने विहितत्वेन अङ्गस्य एकभक्तस्यापराह्णादौ प्राप्यमाणत्वात् अप[1]राह्णादिः

---

१) अपराह्णादिरिति अपराह्णादिः कालस्तत्र कर्मकालत्वेन निर्णायकत्वेन वा न ग्रहीतव्यः अपि तु मध्याह्नप्राप्तस्य पूजाव्रतादेः पूज्यवासरे यः अपराह्णादिः कालः स अन्याङ्गैकभक्ते वेदितव्यः न तत्र इतिकर्त्तव्यताहानिरिति ।

### ଏକଭକ୍ତ

ପଞ୍ଚଧା ବିଭକ୍ତ ଦିବସର ଯେ ତୃତୀୟଭାଗ ତାହାର ଉତ୍ତରାର୍ଦ୍ଧ ଏକଭକ୍ତର ମୁଖ୍ୟକାଳ ଓ ଅପରାହ୍ଣ ଗୌଣକାଳ ଅଟେ । ତିଥି ଦୁଇଦିନ କର୍ମକାଳକୁ ସମ୍ପୂର୍ଣ୍ଣ ଥିଲେ ବା ସମ୍ପୂର୍ଣ୍ଣ ନ ଥିଲେ ବା ସମ ପରିମାଣରେ ଥିଲେ ପୂର୍ବଦିନ କରାଯିବ । ଦୁଇଦିନ କର୍ମକାଳକୁ ବିଷମଭାବେ ଥିଲେ ଯେଉଁଦିନ ଅଧିକା ଥିବ ସେହିଦିନ କରାଯିବ ।

---

पाठा.— 1) षट्प्रकारः— ख । 2) "व्यापित्वम्"- ख ।

कालः प्रधानानुसारेण गुणस्य नेतव्यत्वात्। यदा स्वतन्त्रैकभक्तेऽपि केनचित् निमित्तेन मुख्यकालासम्भवे गौणकालोऽभ्यनुज्ञायते, तदा किमु वक्तव्यमन्याङ्गे। यत्तूपवासप्रतिनिधिरूपमेकभक्तं, तदुपवासतिथौ ग्राह्यं तस्य गौणोपवासत्वात्।

"तिथौ यत्रोपवासः स्यादेकभक्तेऽपि सा तिथिः" इति। (सुमन्तुः) न च तादृशमेव नास्तीति शङ्कनीयम्। उपवासव्रतं प्रक्रम्य रोगादिना तदशक्तौ गुर्वनुज्ञया तस्यैकभक्तस्य सम्भावितत्वात्।

अष्टैतान्यव्रतघ्नानि आपो मूलं फलं पयः।
[1]हवि र्ब्राह्मणका[1]म्या च गुरोर्वचनमौषधम्। इति (स्कन्दपु.) शास्त्रात्

## अथ नक्तं निर्णीयते

नक्तशब्दो[2]भोजनपरः। तस्य भोजनस्य रात्राविति कालविधिः। अत्र दिवाभोजनस्य रहितत्वे सति रात्रिभोजनं व्रतस्य स्वरूपम्। अन्यथा

१) हविर्होमाद्युच्छिष्टम् गुरोर्वचनं गुरोरादेशः। अनुमतिर्वा एतदष्टकं प्रतिप्रसवरूप आपदि व्रतहानिनिवारकं व्रतस्थापकं वा।

२) यदपि नक्तशब्दः कालवाची तथाप्यत्र लक्षणया भोजनपरः, व्रतपरश्च।

नक्तप्रशंसा उक्ता देवीपुराणे—

"उपवासात् परं भैक्षं भैक्षात् परमयाचितम्।
अयाचितात् परं नक्तं तस्मान्नक्तेन वर्त्तयेत्॥ (देवीपु. ७८-३)

ଉପବାସ ପ୍ରତିନିଧି ଏକଭକ୍ତରେ ଉପବାସ ନିମନ୍ତେ ଯେଉଁଦିନ ତିଥି ଗ୍ରାହ୍ୟ ତାହାହିଁ ଗ୍ରହଣ କରଯିବ ଓ ଅନ୍ୟାଙ୍ଗ ଏକଭକ୍ତ ନିମନ୍ତେ ଅଙ୍ଗୀକର୍ମର ପୂଜ୍ୟ ତିଥି ଗୃହୀତ ହେବ। ଏ ଉଭୟ ସ୍ଥଳରେ ଏକଭକ୍ତର କାଳ ଅନୁସାରେ ତିଥି ନିର୍ଣ୍ଣୀତ ହେବ ନାହିଁ।

ରୋଗପ୍ରଭୃତିଦ୍ୱାରା ଉପବାସରେ ସାମର୍ଥ୍ୟହାନି ଘଟିଲେ ଗୁରୁପ୍ରଭୃତିଙ୍କ ଆଦେଶରେ ଏକଭକ୍ତାଦିଦ୍ୱାରା ମଧ୍ୟ ବ୍ରତରକ୍ଷା କରଯାଇପାରେ। ଯେହେତୁ ଜଳ, ମୂଳ, ଫଳ, କ୍ଷୀର, ହବିଃ ବ୍ରାହ୍ମଣାନୁଜ୍ଞା ଗୁରୁଙ୍କ ଆଦେଶ ଓ ଔଷଧ ଏହି ଆଠ- ଗୋଟି ବ୍ରତନାଶକ ନୁହନ୍ତି।

पाठा.- 1) कामाय- ग।

स्वतः[1] प्राप्तस्य रात्रिभोजनस्य विधानवैयर्थ्यात्। नक्तस्य कालद्वयं दर्शितम्—

"मुहूर्त्तोनं[2] दिनं नक्तं प्रवदन्ति मनीषिणः।
[1]नक्षत्रदर्शनान्नक्तमहं मन्ये गणाधिप ॥ (भविष्यपु.)

अस्य च कालद्वयस्य अधिकारिभेदेन व्यवस्था।

"नक्षत्रदर्शनान्नक्तं गृहस्थस्य बुधैः स्मृतम्।
यतेर्दिनाष्टमेभागे तस्य रात्रौ निषिध्यते ॥ (देवलः)
नक्तं निशायां कुर्वीत गृहस्थो विधिसंयुतः।
यतिश्च विधवा चैव कुर्यात्तत् सदिवाकरम्।
दिवानक्तं तु तत् प्रोक्तमन्तिमे घटिका[3]द्वये।
निशानक्तं तु तत् प्रोक्तं या[4]मार्द्धे प्रथमे सदा। (स्मृत्यन्तरम्)

---

लिङ्गपुराणेऽपि—

"अष्टम्यां च चतुर्दश्यां पक्षयोरुभयोरपि ॥ ३
वर्षमेकं तु भुञ्जानो नक्तं यः पूजयेच्छिवम्।
सर्वयज्ञफलं प्राप्य स याति परमां गतिम्। १-८३-४

तथा— उपवासात् परं भैक्षं भैक्षात्परमयाचितम्।
अयाचितात्परं नक्तं तस्मान्नक्तेन वर्त्तयेत् ॥ १०
देवैर्भुक्तं तु पूर्वाह्णे मध्याह्ने ऋषिभिस्तथा।
अपराह्णे तु पितृभिः सन्ध्यायां गुह्यकादिभिः ॥
सर्ववेलामतिक्रम्य नक्तभोजनमुत्तमम्।
हविष्यभोजनं स्नानं सत्यमाहारलाघवम् ॥ १२
अग्निकार्यमधःशय्यां नक्तभोजी समाचरेत् ॥ लिङ्गपु. ८३-१३

१) स्वतः प्राप्तस्य- रागतः प्राप्तस्य।

२) मुहूर्त्तोनमिति सूर्यास्तमनात् पूर्वम्।

३) घटिकाद्वये—दण्डद्वये।

४) यामः—प्रहरः।

---

पाठा.- 1) नक्षत्रेत्यारभ्य व्यवस्थेत्यन्तं नास्ति—क।

**रात्रिनक्त भोजने तु**[1]—

त्रिमुहूर्त्तः प्रदोषः स्याद् भानावस्तं गते सति ।
नक्तं तत्र तु कर्त्तव्यमिति शास्त्रविनिश्चयः ।। (व्यासः)

तदेवं नक्ततत्का[1]लौ व्यवस्थितौ । तत्र नक्तं प्रदोषव्यापिन्यां तिथौ कार्यम् ।

[2]प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा ।
एकादशीं विना सर्वा शुक्ले कृष्णे तथा स्मृता ।। (वत्सः)

प्रदोषव्यापिनी ग्राह्या सदा नक्तव्रते तिथिः ।
[3]उदयाच्च सदा पूज्या हरिन[2]क्तव्रते तिथिः ।। (स्कन्दपु.)

अत्राप्येकभक्तन्यायेन षोढा विषयभेदा उत्प्रेक्षणीयाः मध्याह्न-प्रदोषयोरेव भिन्नत्वात् । पूर्वेद्युरेव प्रदोषव्याप्तौ पूर्वतिथिः । परेद्युरेव प्रदोषव्याप्तौ परतिथिः । उभयत्र प्रदोषव्याप्तौ परतिथिरेव ।

यदैव तिथ्योरुभयोः प्रदोषव्यापिनी तिथिः ।
तत्रोत्तरत्र नक्तं स्यादुभयत्रापि सा यतः ।। (जाबालिः)

---

१) नक्तं-नक्तव्रतम् । तत्कालः- नक्तव्रतस्य कालः । दिवानक्त- रात्रिनक्ते यथाक्रमं यतिगृहस्थरूपाधिकारिभेदेन निरूपिते । अतएव यतिं प्रति दिवानक्तं तत्कालश्च, गृहस्थं प्रति रात्रिनक्तं तत्कालश्च इति व्यवस्था ।

२) हरिनक्तव्रते— हरिनक्तम् एकादश्युपवासप्रतिनिधिरूपं नक्तम्, तादृशे नक्तव्रते ।।

ନକ୍ତ

ନକ୍ତର ଦୁଇଗୋଟି କାଳ । ପ୍ରଦୋଷ (ସୂର୍ଯ୍ୟାସ୍ତ ପରେ ତିନିମୁହୂର୍ତ୍ତ) ଓ ସୂର୍ଯ୍ୟାସ୍ତ ପୂର୍ବ ମୁହୂର୍ତ୍ତ । ଗୃହୀମାନେ ସୂର୍ଯ୍ୟାସ୍ତ ପରେ ଓ ଯତିମାନେ ସୂର୍ଯ୍ୟାସ୍ତ ପୂର୍ବରୁ ନକ୍ତ ଭୋଜନ କରିବେ । ଯେଉଁଠି ରାତ୍ରିଭୋଜନ ନିଷିଦ୍ଧ ସେଠି ଗୃହୀମାନେ ମଧ୍ୟ ଦିବାନକ୍ତ କରିବେ ।

---

पाठा.- 1) तु इति नास्ति ख ङ । भोजनकाले- छ ।
2) प्रदोषेतिश्लोकपूर्वार्द्धं नास्ति- ख, सदानक्तव्रते तिथिरिति द्वितीयः पादः- क
3) उदयाच्चेत्यर्द्धं नास्ति- ग । उदयस्थेति कालमाधवे पाठः ।

उभयत्रापि दिवारात्रावपि सा तिथिर्विद्यते यत इत्यर्थः। उभयत्र प्रदोषव्याप्त्यभावेऽपि परैव।

"अतथात्वे परत्र स्यात् यतोऽर्वागस्ततो हि सा" (जावालिः)
प्रदोषे तदभावेऽपि अस्तमयादर्वाक् यतः सा विद्यते [1]ततो ग्राह्येत्यर्थः। अस्य च दिवारात्रिव्रतत्वेन प्रदोषव्याप्तिवत् सायंकालव्याप्तिरपि निर्णयहेतुर्भवतीत्यनेनाभिप्रायेणार्वागस्तमयादित्युक्तम्। अत्र प्रदोष-व्याप्तिर्मुख्यः कालः। सायंकालव्याप्तिरनुकल्पः। ईदृशे विषये गृहस्थोऽपि यतिवद्दिवा नक्तमाचरेत्।

"प्रदोषव्यापिनी न स्याद्दिवा नक्तं विधीयते।
आत्मनो द्विगुणां छायामतिक्रामति भास्करे॥
तन्नक्तं नक्तमित्याहु र्न नक्तं निशि भोजनम्।
एवं ज्ञात्वा ततो विद्वान् सायाह्ने तु भुजिक्रियाम्॥
कुर्यान्नक्तव्रती [1]नक्तफलं प्राप्नोति निश्चितम्। (स्कन्दपु.)

यत्तु सप्तमीभानुवासरादौ सौर[2]नक्तं विहितं तत्र पूर्वोक्तविपर्यासेन सायंकालव्याप्तिर्मुख्यः कल्पः। प्रदोषव्याप्तिरनुकल्पः। नक्तं प्रकुर्वीत

१) सूर्यास्तप्राक्कालस्य गौणकालत्वेनाभ्यनुज्ञातत्वात् इति भावः।
२) सौरनक्तं- दिवानक्तम्। सौरनक्तमुक्तं नारसिंहे—
"हस्तयुक्तेऽर्कदिवसे सौरनक्तं समाचरेत्। स्नात्वार्कमध्ये विष्णुं च ध्यात्वा रोगात् प्रमुच्यते। आत्मनो द्विगुणां छायां यदा सन्तिष्ठते रविः। सौरनक्तं विजानीयान्न नक्तं निशि भोजनम्"। ६८-९

ଯଦି ନକ୍ତ ଦୁଇଦିନ ପ୍ରଦୋଷକୁ ଛୁଇଁ ସମ୍ପୂର୍ଣ୍ଣଭାବେ ଥିଲେ କିମ୍ବା ସମ୍ପୂର୍ଣ୍ଣ ନ ଥିଲେ କିମ୍ବା ସମ ବା ବିଷମଭାବେ ଥିଲେ ପରଦିନ କରାଯିବ। କିନ୍ତୁ ଦିବାନକ୍ତ ଦୁଇଦିନ ସାୟଂକାଳ (ସୂର୍ଯ୍ୟାସ୍ତ ପୂର୍ବ)କୁ ଛୁଇଁ ଥିଲେ ନ ଥିଲେ ବା ସମ ବା ବିଷମଭାବେ ଥିଲେ ପୂର୍ବଦିନ କରାଯିବ। ଉପବାସ ପର୍ଯ୍ୟନ୍ତ ନକ୍ତ ଉପବାସ ବିଧିରେ, ଓ ଅନ୍ୟାଙ୍ଗଙ୍କର ମୁଖ୍ୟକର୍ମର କାଳ ଅନୁ-ସାରେ କରୁଯିବା ହେବ।

पाठा.- 1) नक्तफलं भवति- ख ग, नक्तफलं लभति घ भ।

रात्राविति सामान्येनाभिधानात् निशीथपर्यन्तो जघन्यः कालः रात्रिनक्ते। साम्येन वैषम्येण वा दिनद्वये प्रदोषैकदेशव्याप्तौ परेद्युरेव नक्तं कार्यम्। सायंकालस्य गौणस्य तत्तिथिव्याप्तत्वात्। [1]तत्राप्येकभक्तवदन्याङ्गनक्तोपवासस्थानीयनक्तयोर्निर्णयो द्रष्टव्यः।

## अथायाचितं निर्णीयते

अयाचितं याचितभोजननिषेधरूपम्। अतएव संकल्पोऽप्यस्मिन्नहोरात्रे याचितमन्नं न भोक्तव्यमित्येव कर्त्तव्यः। अथ याचितादन्यदयाचितमित्यत्र अप्रयत्नलभ्यस्य परदत्तस्य भोजनरूपम्। [1]यद्यपि स्वगृहे पूर्वसञ्चितं वस्तु इदानीमयाचितं भवति तथापि पूर्वं प्रयत्नसम्पादितत्वात् याचितमेव। अथ[2]वा निषेधस्य प्राप्तिपूर्वकत्वात याचितप्रसक्तेश्च परद्रव्यविषयत्वात् [2]याचितशब्दोऽपि परद्रव्यमेव विषयीकरोति। अत्रायाचितशब्दस्य यथोक्तरीत्या द्वावर्थौ सम्पन्नौ। प्रतिषेधः पर्युदासश्चेति।

---

१) यद्यपीति। याच्ञा हि स्योपभोगाय रागतः क्रियते इति उपार्जितमात्रमेव याचितं, तेन पूर्वसञ्चितं याचितमेव।

२) अथवेति। कश्चित्पूर्वं प्रतिग्रहादिनापि लब्धम् अयाचितं वस्तु पूर्वसञ्चितमिदानीमयाचितव्रतकाले अयाचितत्वेन गृह्यतामित्याशङ्कायामुच्यते प्राप्तिपूर्वकत्वादिति। प्राप्तिमन्तरा निषेधः न प्रवर्त्तते। स्वगृहसञ्चिते वस्तुनि रागतः भोजनप्राप्तिरस्त्येव। अयाचितलब्धमपि प्रतिग्रहेण सञ्चयनेन च स्वोपभोगाय कल्पितं तत् याचितमेव। अतएव तादृशे याचिते रागतः भोजनप्राप्तिविषये "याचितं नाश्नीयात्" इति निषेधः युज्यते इति सारः। याच्ञा च परद्रव्ये भवति न तु स्वे द्रव्ये इति सर्वथा याचितशब्दः परद्रव्यविषयः।

---

पाठा.– 1) अनेनैव न्यायेन सौरनक्तेषु सायंकालैकदेशव्याप्तौ पूर्वतिथिर्ग्राह्या प्रदोषकालस्य गौणस्य तत्तिथिव्याप्तत्वात्, अत्राप्ये- झ। अत्राप्ये–गघ

2) अयाचित- ख घ छ झ।

तयोः प्रतिषेधपक्षं प्राजापत्यकृच्छ्रव्याख्याने गौत[1]मो व्याजहार। अथापरं त्र्यहं नक्तम्। अथापरं त्र्यहं न कञ्चन याचेत इति।

पर्युदासपक्षं बृहस्पतिर्व्याजहार—

"त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्।
त्र्यहं परं च नाश्नीयात् प्राजापत्यं चरन् द्विजः॥
[2]अयाचिताशी मितभुक् परां सिद्धिमवाप्नुयात्। इति।

मितभोजित्वं दशग्रासभोजित्वम्। यदि प्रतिषेधः यदि वा पर्युदास उभ[3]यथाप्येकभक्तादिवन्न कालो विशेषणीयः। प्रतिषेधेऽनुष्ठेयाभावात्। पर्युदासे पराधीनत्वात्। [1]असति कालविशेषविधौ न कर्मकालव्याप्तिवचनमत्र प्रवर्त्तते। तथा[2] सति उपवासवत् अयाचिते तिथि ग्राह्या।

## अथ दानं व्रतानि च निर्णीयन्ते

[4]पौर्वाह्णिकास्तु तिथयो दैवकार्ये फलप्रदाः। (बृ. याज्ञव.)

इति वचनादुदिते भानौ त्रिमुहूर्त्ता तिथिर्ग्राह्या। अतएव माधवाचार्याः—

"सोदयत्रिमुहूर्त्तायां कुर्याद्दानव्रतानि च" इति।

---

१) गौतमधर्मसू- अथापरं त्र्यहं नक्तं भुञ्जीत॥ ३॥ अथापरं त्र्यहं न कञ्चन याचेत। ३-८-४

२) अयाचिताशीति स्मृत्यन्तरमिति कालमाधवे।

३) उभयथा-प्रतिषेधपक्षे पर्युदासपक्षे च। पर्युदासप्रतिषेधयोः स्वरूपं यथा—
'प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता।
पर्युदासः स विज्ञेयो यत्रोत्तरपदे न नञ्॥ यथा अयाचितं भक्षयेत्।
अप्राधान्यं विधेर्यत्र प्रतिषेधेऽप्रधानता।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्। यथा याचितं न भक्षयेत्।

४) पौर्वाह्णिकवचनं बृद्धयाज्ञवल्क्यस्येति कालसारे बृहद्याज्ञवल्क्यस्येति कालमाधवे।

ଟୀକା

ଅଯାଚିତ ବ୍ରତରେ କର୍ମକାଳ ନାହିଁ। ତେଣୁ ତାହା ଉପବାସ ନ୍ୟାୟରେ ନିରୂପିତ ହେବ।

---

पाठा.-1) असति च- ख,भ। 2) तथा-क, तथापि- ग घ।

अत्राप्येकभक्तवत् षोढा भिद्यते। उदयकाले पूर्वेद्यु रेव त्रिमुहूर्त्त-व्यापिनी। परेद्यु रेव त्रिमुहूर्त्तव्यापिनी। उभयत्रापि त्रिमुहूर्त्तव्यापिनी। नोभयत्र त्रिमुहूर्त्तव्यापिनी। उभयत्रापि साम्येन वैषम्येण वा त्रिमुहूर्त्तै-कदेशव्या[1]पिनी चेति। अत्र प्रथमपक्षे खण्डतिथित्वाभावान्न सन्देहः। तृतीयादिषु चतुर्षु पक्षेषु अस्तमयव्याप्तेः कर्मकालबाहुल्यस्य च लाभात् पूर्वेद्युरेवानुष्ठानम्। द्वितीयपक्षे क्षयगामित्वे त्रिमुहूर्त्तमप्युत्तरविद्धां परित्यज्य पूर्वेद्यु रेवानुष्ठातव्यम। वृद्धिगामित्वे साम्ये च परेद्यु रिति निर्णयः।

अत्र माधवाचार्याः—परत्रैव तथात्वं चेत् पूर्वा ग्राह्या तिथिक्षये।
तिथेः साम्ये च वृद्धौ च गृह्यतां तिथिरुत्तरा ॥इति।

## [2]अथ तिथिः। तत्रादौ प्रतिपद् ॥

सम्बत्सरादिप्रतिपद्।

चैत्रे मासि जगद् ब्रह्मा ससर्ज प्रथमेऽहनि।
शुक्लपक्षे समग्र तु तदा सूर्योदये सति ॥
प्रवर्त्तयामास तदा कालस्य गणनामपि।
ग्रहान् नागानृतून् मासान् वत्सरान् वत्सराधिपान् ॥ इति

(ब्रह्मपु.)

"या शुक्ला चैत्रमासस्य वत्सरादितिथिः स्मृता।
या शुक्लप्रतिपच्चैत्रमासस्य वत्सरस्य सा ॥
पूर्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुता।
नन्दां संवत्सरादौ तु दर्शविद्धां न कारयेत् ॥"

---

ଵାନବ୍ରତାଦ

ଦାନ ଓ ବ୍ରତ ନମନ୍ତେ ସାଧାରଣତଃ ପୋଦପୂର୍ବ ମୁହୂର୍ତ୍ତ କାଳ ଗ୍ରାହ୍ୟ ଅଟେ।

---

पाठा.—1) स्पर्शिनी- ख ग घ छ भ। 2) धाटिका नास्ति ख घ ङ भ

परविद्धा [1]प्रकर्त्तव्या द्विमुहूर्त्ता भवेद्यदि ।
मुहूर्त्तमेव कर्त्तव्या प्रतिपद् द्वितीयान्विता ।।

मुहूर्त्तद्वितयं चैव मुहूर्त्तं यदि वा परे ।
वर्त्तते वासरे यस्मिन् प्रातः [1]साब्दतिथिर्भवेत्" ।। इति (ब्रह्मपु.)

## कार्त्तिकशुक्लप्रतिपदि बलिराजोत्सवः

अत्र [2]पूर्वविद्धा ग्राह्या ।

"श्रावणी दुर्गनवमी तथा दूर्वाष्टमी च या ।
पूर्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम् ।। (पद्मपु.)
"बल्युत्सवं च पूर्वेद्युरुपवासवदाचरेत् ।। इति माधवाचार्याः ।

## द्वितीया

सा च पूर्वयुताग्राह्या ।

"प्रतिपत्सद्वितीया स्याद् द्वितीया प्रतिपद्युता । (आपस्तम्बः)
एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी ।
[2]त्रयोदश्यप्यमावास्या उपोष्याः स्युः पराान्विताः । (भगवत्स्मृतिः)

इति वचनं तु पूर्वदिने त्रिमुहूर्त्तासत्त्वे परदिने त्रिमुहूर्त्तसत्त्वे एव वेदितव्यम् ।
युग्मवाक्यम[3]प्येतद्विषयं वेदितव्यम् ।
अतएव माधवाचार्याः- पूर्वेद्युरसती प्रातः परेद्युस्त्रिमुहूर्त्तगा ।
सा द्वितीया परोपोष्या पूर्वविद्धा ततोऽपरा ।

---

१) अब्दतिथिः- संम्वत्सरादिप्रतिपत् ।

२) प्रदीपामावास्याश्राद्धपरदिने बल्युत्सवः इति निष्कर्षः ।

ଚୈତ୍ର ଶୁକ୍ଳପ୍ରତିପତ୍ ଚାନ୍ଦ୍ରସମ୍ବତ୍ସରର ଆରମ୍ଭ ତିଥି । ତାହା ପରବିଦ୍ଧା ତଥା ସୂର୍ଯ୍ୟୋଦୟବ୍ୟାପିନୀ ଗ୍ରାହ୍ୟା ଅଟେ । (କିନ୍ତୁ ଦୁର୍ଗାପୂଜା ସମୟରେ ପୂଜାକାଳବ୍ୟାପିନୀ ତିଥି ଗୃହୀତ ହେବା ସମାଚାର ରହିଅଛି) ।

କାର୍ତ୍ତିକଶୁକ୍ଳପ୍ରତିପଦାରେ ବଳିରାଜୋତ୍ସବ ହୁଏ ସେଥିରେ ପୂର୍ବବିଦ୍ଧା ତିଥି ଗ୍ରାହ୍ୟ ଅଟେ ।

ଦ୍ୱିତୀୟା

ସାଧାରଣତଃ ପ୍ରତିପଦ୍‌ଯୁକ୍ତା ଦ୍ୱିତୀୟା ପ୍ରଶସ୍ତା । ପୂର୍ବଦିନ ସକାଳୁ ତ୍ରିମୁହୂର୍ତ୍ତ ନ ଥାଇ ପରଦିନ ସୂର୍ଯ୍ୟୋଦୟଠାରୁ ତିନିମୁହୂର୍ତ୍ତ ଥିଲେ ପରଦିନ, ଅନ୍ୟଥା ପୂର୍ବଦିନ ହେବ ।

---

पाठा.- 1) न कर्त्तव्या-ख घ । 2) चतुर्दश्यप्य-ख । 3) वाक्यमेतद् क, ख ।

## [1]गुण्डिचायात्रा

आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता ।
तस्यां रथे समारोप्य रामं मां भद्रया सह ॥
यात्रोत्सव प्रवर्त्याथ प्रीणयेत्तु द्विजान् बहून् ।
ऋक्षाभावे[1] तिथौ कार्या सदा सा प्रीतये मम ॥

मां जगन्नाथम । सा–यात्रा ।

गुण्डिचामण्डपं यान्तं ये पश्यन्ति रथे स्थितम् ।
कृष्णं बलं सुभद्रां च ते यान्ति भवनं हरेः । [1]
ये पश्यन्ति तदा कृष्णं सप्ता[2]हं मण्डपे स्थितम् ।
हरिं रामं सुभद्रां च विष्णुलोकं व्रजन्ति ते ॥ (ब्रह्म-६६-२)

---

१) पुष्यानक्षत्रयोगाभावेऽपि केवलायाम् आषाढशुक्लद्वितीयायां गुण्डिचा-यात्रा कार्या सदाशब्दयोगेन यात्राया नित्यत्वात् ।

२) अत्र सप्ताहमिति नात्यन्तसंयोगे द्वितीया अपितु सप्ताहं यावत् इति वोद्धव्यम् । तेन देवप्रतिमानां गुण्डिचामन्दिरे सप्ताहस्थितिः न नियता किन्तु गमनागमनवासरावेव नियताविति निष्कर्षः । तेन द्वितीयायां गुण्डिचामन्दिरं प्रति गमनं सप्ताहं तत्र मण्डपे स्थितिः, नवमदिने पुनः प्रत्यागमनं चेति सर्वम् एकैव यात्रा । इत्युक्तं स्कान्दे—

"दक्षिणाभिमुखा यात्रा विष्णोरेषा सुदुर्लभा ।
यात्रा प्रयत्नतः सा हि भक्तिश्रद्धा समन्वितैः । ८
यथा पूर्वा तथा चेयं द्वे च मुक्तिप्रदायिके ।
यात्राप्रवेशौ देवस्य एक एवोत्सवो मतः ॥ ९
पुराविदो वदन्त्येनां यात्रां नवदिनात्मिकाम् (पु. क्षेत्रमा–३५–१०)

प्रत्यागमनाव्यवहितपूर्वसायसन्ध्यादर्शनेन सुमहत् पुण्यम् । तदुक्तं तत्रैव—

"दिनानि सप्त यान्यत्र कृष्णो वसति मण्डपे । ३४-३३
एकस्मादुत्तरं श्रेयो यत्तस्मादुत्तरोत्तरम् ॥

तथा– "दिवा तद्दर्शनं पुण्यं रात्रौ दशगुणं भवेत् । (३४–१२) । इति ।

---

पाठा.– 1) अथ गुण्ड क–ख ।

तथा— "यात्रां कृत्वा गुण्डिचाख्यां विधिवत् सुसमाहितः ।
आषाढस्य सिते पक्षे नरो योषिदथापि वा ॥
दृष्ट्वा रामं च कृष्णं च सुभद्रां च द्विजोत्तमाः ।
दशपञ्चाश्वमेधानां फलं प्राप्नोति चाधिकम् ॥ (ब्रह्मपु.)

अत्र [1]पूर्वाह्णव्याप्तिर्ग्राह्या ॥

[2]कोप्रेचैचा[1] द्वितीयास्ताः प्रेतपक्षे गते तु या ।
या तु कोजागरे याते चैत्रावल्याः परे तु[2] या ॥
चातुर्मास्ये समाप्ते च द्वितीया या भवेत्तिथिः ।
परास्वेतास्वनध्यायः पुराणैः परिकीर्त्तितः ॥ (राजमार्त्तण्डः)

चैत्रावली—चैत्रपौर्णमासी ।

---

१) अत्र पूर्वाह्णव्याप्तिरिति सूर्योदयव्याप्तिरेव "दैवे ह्यौदयिकी ग्राह्या" इति नारदीयोक्तेः । सर्वत्र देवयात्रासु न सोदयत्रिमुहूर्त्तव्याप्तिशङ्का कार्या उदयवेधेनैव देवयात्राया विहितत्वात् तथैव समाचाराच्च ।

"आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता ।
अरुणोदयवेलायां तस्यां देवं प्रपूजयेत्', ॥ (क्षेत्रमा-३३-३८)

इति स्कान्दोक्तौ यद्यप्यरुणोदयः स्मर्यते तथापि सूर्योदय एवात्र यात्राकालः, अरुणोदयस्तु तत्पूर्वभाविकर्मसम्पादनकालः ।

२) अनध्ययने तिथिरौदयिकी एव ।

"यां तिथिं समनुप्राप्य उदयं याति भास्करः ।
सा तिथिः सकला ज्ञेया स्नानदानजपादिषु ॥

इति देवलस्मरणात् । अध्ययनस्य जपरूपत्वाच्च । चातुर्मास्ये समाप्ते—कार्त्तिकपूर्णिमाद्यनन्तरपतितकृष्णद्वितीयायाम् ॥

ଗୁଣ୍ଡିଚା

ଆଷାଢ଼ ଶୁକ୍ଳ ୨ୟାରେ ଶ୍ରୀଗୁଣ୍ଡିଚା ରଥଯାତ୍ରା ହୁଏ । ତାହା ସୂର୍ଯ୍ୟୋଦୟବ୍ୟାପିନୀ ତିଥିରେ ହେବ । ତିଥି ଦୁଇଦିନ ସୂର୍ଯ୍ୟୋଦୟକୁ ଥିଲେ ପୂର୍ବଦିନ ହେବ ଓ ଗୁଣ୍ଡିଚାର ନବମ ଦିନ ବାହୁଡ଼ାଯାତ୍ରା ହେବ ।

---

पाठा.- 1) कोप्रेचैचाद्वितीया- घ, भ प्रेकोचैचा—कालसर्वस्वपाठः । 2) च—ख ।

[1]शुचावूर्जे तपस्ये च या द्वितीया विधुक्षये ।
चातुर्मास्यद्वितीयास्ताः प्रवदन्ति मनीषिणः ।। (वृद्धगार्ग्यः)
शुचावाषाढे । ऊर्जे कार्त्तिके । तप[1]स्ये-फाल्गुने । विधुक्षये-कृष्णपक्षे ।

## यमद्वितीया

कार्त्तिके तु द्वितीयायां शुक्लायां भ्रातृपूजनम् ।
या न कुर्याद् विनश्यन्ति भ्रातरः सप्तजन्मनि ।। (लिङ्गपु)
तस्या इति शेषः ।
"कार्त्तिके शुक्लपक्षे तु द्वितीयायां युधिष्ठिर ।
यमो यमुनया पूर्वं भोजितः स्वगृहे स्वयम् ।।
तस्यां निजे गृहे राजन् न भोक्तव्यमतो बुधैः ।
यत्नेन भगिनीहस्ताद् भोक्तव्यं पुष्टिवर्द्धनम् ।।
दानानि च प्रदेयानि भगिनीभ्यो विशेषतः" । (भारतम्)
अत्र भोक्तव्यं पुष्टिवर्द्धनमिति विधिसमभिव्याहृतफलश्रुत्या भोजननियमस्य प्राधान्यात्तस्य मुख्यकालोऽष्टधाविभक्तदिवसस्य पञ्चमांशो ग्राह्यः ।
"पञ्चमे च तथा भागे संविभागो यथार्हतः ।
पितृदेवमनुष्याणां कीटानां चोपदिश्यते ।। (दक्षः २-५६)
संविभागं ततः कृत्वा गृहस्थः शेषभुग् भवेत्" (दक्षः २-६८)इति वचनात् ।
संविभागो विभज्यान्नस्य प्रतिपादनम् । यथार्हतो यथायोग्यम् । अन्नं दत्त्वा पठति— "भ्रातस्तवानुजाताऽहं भुङ्क्ष्वभक्तमिदं शुभम् ।
प्रीतये यमराजस्य यमुनाया विशेषतः ।।
ज्येष्ठा चेदग्रजाताहमिति पठेत् । अत्र द्वैधे प्रतिप[2]द्युता ग्राह्या ।

---

१) शुचावित्यत्र दर्शान्तो मासो विवक्षितः ।

२) यमद्वितीयायां तिथिद्वैधे परविद्धा ग्राह्या इति गदाधरः । तन्मतं तु समीचीनं युग्मात् । तस्यामेवोदयव्यापिन्यां लिङ्गराजदेवस्य यात्रा कार्या । "दैवे ह्योदयिकी ग्राह्ये"ति नारदीयोक्तेः ।

ଅଦ୍ୟପୂଜ ଦ୍ୱିତୀୟା
ଆଶ୍ୱିନ ଶୁକ୍ଳ, କାର୍ତ୍ତିକ କୃଷ୍ଣ, ବୈଶାଖ କୃଷ୍ଣ, ଶ୍ରାବଣ କୃଷ୍ଣ, ମାର୍ଗଶୀର କୃଷ୍ଣ ଓ ଚୈତ୍ର କୃଷ୍ଣ ଦ୍ୱିତୀୟାମାନଙ୍କରେ ଅଦ୍ୟପୂଜ କରିବା ଅଟେ ।

---

पाठा.- 1) तपस्ये फाल्गुने इति नास्ति, क, ख ।

प्रतिपद् सद्वितीया स्यादद्वितीया प्रतिपद्युता । इति (आपस्तम्बः)

यस्तु द्वितीयायाः प्रतिपद्युक्तत्वं तत् [1]यमद्वितीयाविषयम् । तस्यां हि भगिनीभिर्भ्रातरो भोज्यन्त इति अनन्त[2]भट्टीकारः ।

तथा यमद्वितीयायां यात्रायां मरणं ध्रुवम् ।

## तृतीया

सा चतुर्थीयुता रम्भाव्रतेतरदैवकर्मसु ग्राह्या ।

रम्भाख्यां वर्जयित्वा तु तृतीयां मुनिसत्तम ।
अन्येषु सर्वकार्येषु गणयुक्ता प्रशस्यते ।। (ब्रह्मवै.पु.)
"द्वितीयाशेषसंयुक्तां तृतीयां कुरुते तु यः ।
स याति नरकं घोरं कालसूत्रं भयङ्करम् ।।
चतुर्थीसंयुता या च सा तृतीया फलप्रदा ।
न वैधव्यकरी स्त्रीणां पुत्रपौत्रप्रवर्धिनी ।। (आपस्तम्बः)

ततश्च युग्मवाक्यं रम्भा[1]व्रतपरम् ।

## अक्षयतृतीया

वैशाखे मासि राजेन्द्र तृतीया चन्दनस्य च ।
कलधौतं तथा धान्यं घृतं चापि विशेषतः ।।
तस्यां दत्तं त्वक्षयं स्यात् तेन सा त्वक्षया स्मृता । (भविष्यपु,)

---

१) रम्भाव्रते सूर्यास्तात् पूर्वं त्रिमुहूर्त्तं द्वितीयायुक्ता तृतीया ग्राह्या । दिनद्वये तथात्वे तु पूर्वा युग्मात् ।

କାର୍ତ୍ତିକ ଶୁକ୍ଳ ଦ୍ୱିତୀୟା ଯମଦ୍ୱିତୀୟା । ଏଥିରେ ଭଉଣୀଘରେ ଭାଇ ଖାଇବା ଶୁଭ । ଅଷ୍ଟଧା ବିଭକ୍ତ ଦିବସର ୫ମ ଭାଗ ଏହାର କର୍ମକାଳ । ତିଥି ଦ୍ୱୈଧ ହେଲେ ଗ୍ରନ୍ଥକାରଙ୍କ ମତେ ପୂର୍ବଦିନ କିନ୍ତୁ ଗଦାଧରଙ୍କ ମତରେ ପରଦିନ ହେବ । ମୋ ମତରେ ମଧ୍ୟ ପରଦିନ ସମୀଚୀନ । ଶ୍ରୀ ଲିଙ୍ଗରାଜଙ୍କ ଯାତ୍ରା ନିମନ୍ତେ ତିଥିର ଉଦୟବେଧ ଗ୍ରାହ୍ୟ ଅଟେ ।

---

पाठा.- 1) यमद्वितीयाविशेषणम्-क, ङ । 2) अनन्तभट्टाः-भ ।

तृतीया चन्द[1]नस्येति वचनात् अत्र चन्दनदानं प्रशस्तम् ।

"दानात्तु चन्दनस्येह कञ्जजो नात्र संशयः" ।

कञ्जजो ब्र[1]ह्मा भवतीत्यर्थः ।

"योऽस्यां ददाति करकान् वारिवाजसमन्वितान् ।

स याति पुरुषो वीर लोकान् वै हेममालिनः ।।

करकान् कुम्भान् । वाजमन्नम् । हेममालिनः-सूर्यस्य ।

"वैशा[2]ख[2]शुक्लपक्षे तु तृतीयायां जनार्दनः ।

यवानुत्पादयामास युगमा[3]रब्धवान् कृतम् ।।

ब्रह्मलोकात् त्रिपथगां पृथिव्यामवतारय[4]त् ।

तस्यां कार्यो यवै र्होमो यवै र्विष्णुं समर्च्चयेत् ।।

यवान् दत्त्वा द्विजातिभ्यः प्रयतः प्राशयेद् द्विजान् ।

पूजयेत् शङ्करं गङ्गां कैलासं च हिमालयम् ।।

भगीरथं च नृपतिं सागराणां सुखावहम् ।

स्नानं दानं तपः श्राद्धं जपहोमादिकं च यत् ।।

श्रद्धया क्रियते य[5]त्तु तदानन्त्याय कल्प्यते ।

सिन्धोस्तीरे विशेषेण सर्वमक्षयमुच्यते" । (ब्रह्मपु.)

नक्षत्रयोगे तु फ[3]लातिशयः ।

वैशाखे मासि राजेन्द्र शुक्लपक्षे तृतीयिका ।

अक्षया सा तिथिः प्रोक्ता कृत्तिका रोहिणीयुता ।।

---

१) तृतीया चन्दनस्येति वचनात् न केवलं चन्दनदानम् अपितु देवप्रतिमानां चन्दनोत्सवोऽपि क्रियते । पुरुषोत्तमक्षेत्रे श्रीजगन्नाथदेवस्य विंशतिदिवसात्मिका अन्येषां चोत्कलदेशे एकविंशतिदिवसात्मिका चन्दनयात्रा क्रियते ।

ब्राह्मे च "यस्तु पश्येत्तृतीयायां कृष्णं चन्दनभूषितम् ।

वैशाखस्य सिते पक्षे स यात्यच्युतमन्दिरम् ॥ इति । ६३-२९

२) सर्वमक्षयमुच्यते इति स्थाने सर्वमक्षयमश्नुते इति कालसारपाठः ।

३) फलातिशय इत्युक्त्या नैव नक्षत्रयोगेन ग्राह्यातिथिनिर्णयः कार्यः इत्यर्थः ।

---

पाठा.– 1) ब्रह्मा, नास्ति-छ । 2) वैशाखे- ग घ । 3) युगं- चा–ख, भ । 4) येत्– भ, घ । 5) तत्र- ध, छ, भ ।

तस्यां दानादिकं पुण्यमक्षयं समुदाहृतम् ।। इति
यः पश्यति तृतीयायां कृष्णं चन्दनभूषितम् ।
वैशाखस्य सिते पक्षे स यात्यच्युतमन्दिरम् ।।

एषा उत्त[1]रविद्धा ग्राह्या ।

## रम्भातृतीया

सा[1] द्विविधा । ज्येष्ठशुक्लतृतीयायामेका मार्गशीर्षतृतीयायामेका च ।

भद्रे कुरु प्रयत्नेन रम्भाख्यं व्रतमुत्तमम् ।
ज्येष्ठशुक्लतृतीयायां स्नाता नियमतत्परा ।। (भविष्यपु.)

तथा [2]अपरं रम्भाव्रतं पठितम् ।

रम्भातृतीयां वक्ष्यामि सर्वपापप्रणाशिनीम् ।
मार्गशीर्षे तथा मासि तृतीयायां नराधिप ।।
शुक्लायां प्रातरुत्थाय दन्तधावनपूर्वकम् ।

इत्यादिना व्रतमभिधाय उपसंहृतम् ।

सौभाग्यार्थं पुरा चीर्णं रम्भया राजसत्तम ।
तेन रम्भातृतीयेयं परं सौभाग्यदायिनी ।।

सा च पूर्वविद्धा ग्राह्या ।

रम्भातृतीया पूर्वा स्यादुत्तरा स्याद् व्रतान्तरे ।
परेऽह्नि नास्ति चेत् पूर्वविद्धाप्यस्तु व्रतान्तरे ।। (माधवाचार्यः)

---

१) अत्रापि तिथिरुदयव्यापिन्येव ग्राह्या । दिनद्वये तूदयव्यापिन्यां पूर्वैव परायां मलत्वेन अकर्मण्यत्वात् ।

ତୃତୀୟା ରମ୍ଭା ବ୍ରତରେ ପୂର୍ବବିଦ୍ଧା ଅନ୍ୟତ୍ର ପରବିଦ୍ଧା ଅଟେ ।
ବୈଶାଖ ଶୁକ୍ଳ ତୃତୀୟା ଅକ୍ଷୟ ତୃତୀୟା ଏବଂ ସତ୍ୟଯୁଗାଦ । ଏଥିରେ ସୂର୍ଯ୍ୟୋଦୟବ୍ୟାପିନୀ ତିଥି ଗ୍ରାହ୍ୟ । ଉଭୟ ସୂର୍ଯ୍ୟୋଦୟକୁ ଥିଲେ ପୂର୍ବଦିନ ହେବ ।
ମାର୍ଗଶିର ଶୁକ୍ଳ ତୃତୀୟା ଓ ଜ୍ୟେଷ୍ଠ ଶୁକ୍ଳ ତୃତୀୟା ରମ୍ଭା ତୃତୀୟା । ସେଥିରେ ପୂର୍ବବିଦ୍ଧା ତିଥି ଗ୍ରାହ୍ୟ ।

---

पाठा. 1) सा द्विविधा......मेकाच" इति नास्ति ख, ग, घ, छ, ज, झ ।
2) चापरं– ग, झ, यथापरं–घ ।

## गौरीव्रतम्

गूडपूपाश्च दातव्या मासि भाद्रपदे सिते ।
तृतीयायां सर्वदानं वासुदेवस्य प्रीतये ॥
उमां शिवं गणेशञ्च विधिवत् पूजयन्ति याः ।
गौरीवरप्रसादेन परं सौभाग्यमाप्नुयुः ॥ (शतानन्दसंग्रहे)

तिथिद्वैधे परदिने व्रतं कार्यम् । तथा च माधवाचार्याः

मुहूर्त्तमात्रसत्त्वेऽपि दिने गौरीव्रतं परे ।
[1]शुद्धाधिकायाम[1]प्येवं गणयोगप्रशंसनात् ।

## चतुर्थी

सा च युग्मवाक्यात् परविद्धा [2]ग्राह्या ।

एकादशी तथा षष्ठी अमावास्या चतुर्थिका ।
उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः । (वसिष्ठः) इति वचनात् ।
अमा वै सोमवारेण रविवारेण सप्तमी ।
चतुर्थी भौमवारेण अक्षयादपि चाक्षया ॥ (भविष्यपु.)

## विनायकव्रतम्

विनायकं समभ्यर्च्य चतुर्थ्यां यदुनन्दन ।
सर्वविघ्नैर्विनिर्मुक्तः कार्यसिद्धिमवाप्नुयात् ॥ (भविष्यपु.)

---

१) गौरीव्रते सूर्योदयव्यापिनी तिथिर्ग्राह्या । तत्र शुद्धाधिकायां गौरीव्रतं परेद्युरिति माधवाचार्यमतं नैव समीचीनं तस्याः तिथिमलत्वेन अकर्मण्यत्वात् "त्यजेदेकादशीं विनेति" वचनेनैव वारितत्वात् गणयोगप्राशस्त्यस्य तदितरस्थलेषु सावकाशाच्च । ततः षष्टिदण्डात्मिकायां तृतीयायां गौरीव्रतं न तु मलतृतीयायाम् इति मन्मतम् ।

ଭାଦ୍ର ଶୁକ୍ଳ ତୃତୀୟା ବାଳତୃତୀୟା ବା ଗୌରୀ ବ୍ରତ । ସେଥିରେ ସୂର୍ଯ୍ୟୋଦୟବ୍ୟାପ୍ତି ଗ୍ରାହ୍ୟ ।

ଚତୁର୍ଥୀ ସାମାନ୍ୟତଃ ପରବିଦ୍ଧା । ଚତୁର୍ଥୀରେ ମଙ୍ଗଳବାର, ସପ୍ତମୀରେ ରବିବାର ଓ ଅମାବାସ୍ୟାରେ ସୋମବାର ପଡ଼ିଲେ ତାହା ଅକ୍ଷୟତୃତୀୟାଠାରୁ ମଧ୍ୟ ଅକ୍ଷୟ ଫଳଦାୟକ ଦିବସ ହୁଏ ।

---

पाठा. 1) यां चाप्येवं-क । 2) पूज्या- ख ग घ छ झ ।

विनायकव्रतं कार्यं सर्वमासेषु षड्मुख ।
चतुर्थी च जयायुक्ता गणनाथसुतोषिणी ।। (स्कन्दपु)
भाद्र[1]शुक्लचतुर्थ्य[1]र्कभौमवारेण संयुता ।
महाचतुर्थी सा ज्ञेया तत्र विघ्नेशमर्चयेत् ।।
व्रतादिनियमैरिष्टं लभते नात्रसंशयः ।
[2]प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने देवमर्चयेत् ।। इति

वचनात् विनायकव्रतस्य मध्याह्नः कर्मकालः ।

## नागचतुर्थी

विनायकव्रतवन्नागव्रतेऽपि चतुर्थी मध्याह्नव्यापिनी ग्राह्या । [2]नागव्रतं यथा—

तिथौ युगाह्वयायाञ्च समुपोष्य यथाविधि ।
शङ्खपालादिनागानां शेषस्य च महात्मनः ।।
पूजा कार्या पुष्पगन्धक्षीराप्यायनपूर्वकम् ।
विषाणि तेषां नश्यन्ति न च हिंसन्ति पन्नगाः ।। (कूर्मपु.)

युगाह्वया-युगसंज्ञका चतुर्थी इत्यर्थः ।

युगं मध्यन्दिने यत्र तत्रोपोष्य फणीश्वरान् ।
क्षीरेणाप्याय पञ्चम्यां पूजयेत् प्रयतो नरः[3] । इति (देवलः)

विनायकचतुर्थीनागचतुर्थ्योर्गरीयान् विशेषः । एकभक्तन्यायेन मध्याह्न-व्याप्तेः षोढ़ाभेदे सति यदा परेद्युरेव मध्याह्नव्याप्तिस्तदा विनायकचतुर्थी

---

१) भाद्रशुक्लेति योगविशेषः ।

२) प्रातः स्नानस्यात्र पूजाङ्गत्वं न तु कर्मकालद्योतकत्वं ।

ଗଣେଶ ଚତୁର୍ଥୀର ମଧ୍ୟାହ୍ନ କର୍ମକାଳ ଓ ଯେ ପୂର୍ବବିଦ୍ଧା । ଉଭୟ ଦିନରେ ଧ ହେଲେ ଯଦି ଚତୁର୍ଥୀ, କେବଳ ପରଦିନ ମଧ୍ୟାହ୍ନକୁ ଥାଏ ତେବେ ପରଦିନ ଅନ୍ୟଥା ପୂର୍ବଦିନ ହେବ ।

---

पाठा. 1) र्थी च- ग, घ । 2) नागचतुर्थ्यां तु- भ । 3)प्रयतो नर इत्यनन्तरं "विषाणि तेषां नश्यन्ति न च हिंसन्ति पन्नगा इति अधिकः- ख, छ, ज ।

परा इतरेषु पञ्चसु भेदेषु जयायोगस्य प्राशस्त्यात् पूर्वेद्युरेव सा भवति । यदा पूर्वेद्युरेव मध्याह्नव्यापिनी तदा नागचतुर्थी पूर्वा इतरेषु पञ्चसु भेदेषु पञ्चमीयोगस्य प्राशस्त्यादुत्तरा भवति । तत् प्राशस्त्यञ्च पञ्चम्यां पूजयेदिति वचनादवसीयते ।

चतुर्थी तु परोपोष्या गणनाथव्रतस्य तु ।
मध्याह्नव्यापिनी पूज्या तद्वन्नागचतुर्थ्यपि ।।
परेद्युरेव मध्याह्नव्याप्तौ विघ्नस्य सोत्तरा ।
अन्यथा पूर्वविद्धैव मातृयोगप्रशस्तितः ।। इति माधवाचार्याः ।
"चतुर्थ्यां च गणेशस्य गौर्याश्चैव विधानतः ।
पूजां कृत्वा लभेत् सिद्धिं सौभाग्यञ्च नरः क्रमात् ।।"

इति लिङ्गपुराणवचनात् ।

सिद्धिसौभाग्य[1]विशिष्टफलकामो यस्यां कस्याञ्चित् चतुर्थ्यां गौरीगणेशौ पूजयेत् । पूजाकालव्यवस्था तु विनायकव्रतवत् द्रष्टव्या । तस्मिन् विशे[2]षानभिधानात् ।

---

१) कालसर्वस्वकारः कृष्णमिश्रः "दिव्यसिंहोऽत्र बभ्राम इत्यभिधाय सिद्धिकामो गणेशचतुर्थ्यामेव पूजयेदित्याह । कालसारकारस्तु दिव्यसिंह-मनुसरति । वस्तुतस्तु "वह्निः स्कन्दपुरन्दरौ गणपति"रित्यादिवचनै श्चतुर्थ्या गाणपत्यत्वेनोक्तेर्दिव्यसिंहवचनं युक्तम् । किन्तु भाद्रशुक्लचतुर्थी प्रशस्ततमा, अन्या शुक्लचतुर्थी प्रशस्ततरा कृष्णाचतुर्थी प्रशस्ता इत्यवधेयम् ।

ନାଗଚତୁର୍ଥୀର ମଧ୍ୟାହ୍ନ କର୍ମକାଳ । କେବଳ ପୂର୍ବଦିନ ମଧ୍ୟାହ୍ନକୁ ଚତୁର୍ଥୀ ଥିଲେ ପୂର୍ବଦିନ, ଅନ୍ୟଥା ପରଦିନ ହେବ ।

ଫଳ କାମନାରେ ଯେ କୌଣସି ଚତୁର୍ଥୀରେ ଗୌରୀ ଓ ଗଣେଶଙ୍କୁ ପୂଜା କରଯାଇପାରେ ।

---

पाठा. 1) सौभाग्यरूपविशिष्ट- घ, झ । 2) विशिष्याभिधानात्-ख, घ, छ, ज । तस्मिन् विधानात्- क, विशेषाभिधानात्-झ ।

## शिवचतुर्थी

मासि भाद्रपदे शुक्ला चतुर्थी शिवपूजिता ।
तस्यां स्नानं तथा दानमुपवासो जपस्तथा ।
तावत् सहस्रगुणितं प्रसादाद्यतिनो नृप ॥ (शतानन्दः)

अत्र पूजाऽपराह्णे कर्त्तव्या । रौद्रत्वात् । तिथिद्वैधे परदिने कर्त्तव्यम् ।

## भाद्रशुक्लचतुर्थी

शुक्लपक्षे चतुर्थ्यां तु सिंहे चन्द्रस्य दर्शनम् ।
मिथ्याभिशंसनं कुर्यात्तस्मात्पश्येन्न तं सदा ॥ (पद्मपु.)

चतुर्थ्यां निषेधदर्शनात् तत्रोदितस्य चन्द्रस्य पञ्चम्यां दर्शने न दोषः ।

तथा— [1]पञ्चाननगते भानौ पक्षयोरुभयोरपि ।
चतुर्थ्यामुदितश्चन्द्रो नेक्षितव्यः कदाचन ॥ (पद्मपु.)

उदितशब्दोऽत्रार्द्धोदितव्यावृत्तिपरः स्वरूपाख्यानपरो वा ।

नारा[2]यणोऽभिशस्तस्तु निशाकरमरीचिषु ।
स्थितः चतुर्थ्यामद्यापि मनुष्यायापतेच्च सः ॥
अतश्चतुर्थ्यां चन्द्रं तु प्रमादाद् वीक्ष्य मानवः ।
पठेद्धात्रेयि[1]कावाक्यं प्राङ्मुखो वाप्युदङ्मुखः ॥ (ब्रह्मपु.)

धात्रेयि[2]कावाक्यं यथा—

सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः ।
सुकुमारकमारोदीस्तव ह्येष स्यमन्तकः ॥ (ब्रह्मपु. १६-३)

---

१) पञ्चाननगते भानौ–सिंहगते सूर्ये, सिंहे मासि इत्यर्थः । उभयोरिति शुद्धमासमलमासयोः, नतु शुक्लकृष्णयोः "शुक्लपक्षे चतुर्थ्यां तु इति वचनेन शुक्लपक्षे एव चन्द्रदर्शनस्य निषिद्धत्वात् ।

२) कालसारे तु नारायणस्थाने वासुदेव इति पाठः । यतः चन्द्रकिरणे वर्त्तमानः कृष्णः अभिशस्तः अतः 'अद्यापि मनुष्यं प्रति सः शापः आपततीति भावः ।

---

पाठा. 1) यिकं–क । 2) धात्रेय– क ।

¹"सीमन्तं प्रेतकृत्यञ्च नवशय्या नवः शशी"। (विष्णुपु. १३-४२)

"मलमासेऽपि कर्त्तव्यं निमित्तविहितं च यत्" ॥इति (स्मृत्यन्तरम्)

वचनात् सिंहे मलमासपातेऽपि चन्द्रदर्शनं निषिद्धम् ।

## माघशुक्लचतुर्थी

माघशुक्लचतुर्थ्यां तु गौरीमाराधयेद् बुधः ।

चतुर्थी वरदा नाम गौरीं तत्र प्रपूजयेत् ॥ (नारदः)

तथा[1]- चतुर्थी वरदा नाम तस्यां गौरी सुपूजिता ।

सौभाग्यमतुलं कुर्यात् पञ्चम्यां श्रीरपि [2]श्रियम् ॥ (धवलसंग्रहः)

इति वचनात् वरदाचतुर्थ्यां सौभाग्यकामो गौरीं पूजयेत् । व्रतसामान्यात् सोदयत्रिमुहूर्त्तव्यापिकालः कर्मकालः । युग्मादिवा[3]क्येन परविद्धा ग्राह्या । परदिने पूर्वाह्णव्यापित्वे[4] पूर्वदिने व्रतम् ।

²गौर्य्याः शुद्धा जयाप्यस्तु नागविद्धा निषिध्यते ॥ इति (माधवा.)

---

१) सीमन्तमिति । सीमन्तं सीमन्तोन्नयनाख्यं संस्कारकर्म स्वकाले क्रियमाणम् । प्रेतकृत्यं प्रेतस्य दाहादिसपिण्डनान्तं कर्म । नवशय्या-नववधूसंगमः । नवः शशी- विवाहानन्तरं नूतनतया विहिता चन्द्रनीराजना । यच्च निमित्तविहितं ग्रहणस्नानश्राद्धादि तत् मलमासे अपि कर्त्तव्यं न च त्यक्तव्यम् । अत्र चन्द्रदर्शननिमित्तकं धात्रेयीवाक्यपठनमपि निमित्तविहितत्वेन कार्यमिति ।

२) जया- तृतीया, नागविद्धा पञ्चमीविद्धा । नागः- पञ्चमी, पञ्चम्यां नागपूजाया विहितत्वात् ।

ଭାଦ୍ର ଶୁକ୍ଳ ଚତୁର୍ଥୀ ଶିବଚତୁର୍ଥୀ । ଅପରାହ୍ଣ ବ୍ୟାପାର କାଳ ଓ ତିଥି ଦ୍ୱୈଧ ହେଲେ ପରଦିନ ଗ୍ରାହ୍ୟ ଅଟେ । ଭାଦ୍ର ଶୁକ୍ଳ ଚତୁର୍ଥୀ ରାତିରେ ଚନ୍ଦ୍ରଦର୍ଶନ ନିଷିଦ୍ଧ । ଦୈବାତ୍ ଦେଖିଲେ ଧାତ୍ରେୟିକା ବାକ୍ୟ ପଠନୀୟ ।

### ବରଦା ଚତୁର୍ଥୀ

ମାଘ ଶୁକ୍ଳ ଚତୁର୍ଥୀ ବରଦା ଚତୁର୍ଥୀ । ସୋଦୟତ୍ରି ମୁହୂର୍ତ୍ତ ବ୍ୟାପାର କର୍ମକାଳ ।

---

पाठा. 1) तथा इत्यारभ्य सुपूजिता" इत्यन्त नास्ति, क,ख । 2) स्वयं-घ । 3) युग्मादिवाक्ये- भ, युग्मेति वाक्यात्-घ । 4) पूर्वाह्णव्यापित्वे- ख, पूर्वाह्णव्यापित्वेऽपि घ, भ । पत्रं नास्ति- ङ ।

## पञ्चमी

सा चतुर्थीयुक्ता ग्राह्या युग्मात् ।

पञ्चमी च प्रकर्त्तव्या चतुर्थीसंयुता विभो । इति वचनात्[1] ।

पञ्चमी तु प्रकर्त्तव्या षष्ठ्यायुक्ता तु नारद । इति (ब्रह्मवै.पु) वचनं स्कन्दोपवासविषयम् ।

तथा च—सर्वत्र पञ्चमी पूर्वा ग्राह्या स्कन्दव्रतेत[2]रेति । (माधवाचार्य:) स्कन्दोपवासे पञ्चमी परविद्धा, अन्यत्र पूर्वविद्धेति । अत्र पञ्चम्या-मुपवासः षष्ठ्यां स्कन्दोपा[3]सनाय ।

## मनसादेवीपञ्चमी

[4]सुप्ते जनार्दने कृष्णे पञ्चम्यां भवनाङ्गणे ।
पूजयेन्मनसादेवीं स्नुहीविटपसंस्थिताम् ॥
पद्मनाभे गते शय्यां देवैः सर्वैरनन्तरम् ।
पञ्चम्यामसिते पक्षे समुतिष्ठन्ति पन्नगाः ॥

मनसादेवी-विषहरी । स्नुही-सर्जवृक्षः । दैवैरिति सहार्थे तृतीया ।

"देवीं सम्पूज्य नत्वा च न सर्पभयमाप्नुयात् ।"
"[1]पञ्चम्यां पूजयेन्नागाननन्ता[5]दीन्महोरगान् ॥
क्षीरं सर्पिश्च नैवेद्यं देयं [6]सर्वविषापहम्" । (देवीपु. ६१-६)

## रक्षापञ्चमी

रात्रौ रक्षाविधानं कर्त्तव्यम् ।

"तथा भाद्रपदे मासि पञ्चम्यां श्रद्धयान्वितः ।
यस्त्वालिख्य नरो नागान् कृष्णवर्णादिवर्णकैः ॥

---

१) सर्पिः- घृतम् । क्षीरसर्पिषी तु गव्ये देये सर्वविषापहमितिनिर्देशात् । सर्वस्थाने सर्प इति क्वचित् पाठः ।

ସ୍କନ୍ଦ ପଞ୍ଚମୀ ପରବିଦ୍ଧା, ତେଦ୍‌ଭିନ୍ନ । ଅନ୍ୟ ପଞ୍ଚମୀ ପୂର୍ବବିଦ୍ଧା ଅଟେ ।

---

पाठा. 1) वचनाच्च- ग, छ, ज, झ । 2) परेति-।ख । 3) पवासनाय– क, झ ।
4) सुप्तेइत्यतः पूर्वं "श्रावणशुक्लपक्षे जाग्रद्गौरीपञ्चमी- क ।
5) न्ताद्यान्- ख, ग, देवीपुराणेऽपि । 6) सर्प- क ।

पूजयेद् गन्धपुष्पैश्च सर्पान् पायसगुग्गुलैः ।
तस्य तुष्टिं समायान्ति पन्नगास्तक्षकादयः ॥
आसप्तमात्कुलात्तस्य न भयं नागतो भवेत् ।
तस्मात् सर्वप्रयत्नेन नागान् सम्पूजयेद् बुधः" ॥ (स्कन्दपु.)

यः श्रवणे स्रवति शीतजले [1]सुरेन्द्र रक्षाविधानमिदमाचरते मनुष्यः ।
आस्ते सुखेन परमेण स वर्षमेकं पुत्रप्रियादिसहितः ससुहृज्जनश्च ॥
(भविष्यपु.)

रक्षाकरणमन्त्रो यथा...घण्टाकर्ण महावीर सर्वव्याधिनिवारण ।
सर्वोपद्रवसंहार[2]विद्रावण हरप्रिय ॥
कण्ठे यस्य महानीलं भूषणं यस्य पन्नगाः ।
तेजांसि तस्य देवस्य रक्षन्तु मम मन्दिरम् ॥

रज्जुधारणमन्त्रो यथा- येन बद्धो बलीराजा दानवेन्द्रो महासुरः ।
तेन त्वाम[3]पि बध्नामि रक्षामाचर मा चल[4] ॥

यदोभयदिने रात्रौ पञ्चमी स्पृशति[१] तदा पूर्वदिने कर्त्तव्यम् ।

## ऋषिपञ्चमी

भाद्रे सितेऽपराह्णे तु पञ्चमी यत्र तिष्ठति ।
विश्वामित्रऋषिः स्त्रीभिः पूज्यः सन्तानवृद्धये ॥ (स्मृतिसमुच्चयः)

---

१) स्पृशतिपदात् सम्पूर्णप्रदोषव्याप्तिनपेक्ष्या । प्रदोषस्पर्शमात्रेऽपि पूर्वेद्युः कर्त्तव्यम् । दिनद्वये प्रदोषव्याप्त्यभावेऽपि पूर्वेद्युरेव ।

ରକ୍ଷା ପଞ୍ଚମୀ

ଭାଦ୍ର କୃଷ୍ଣ ପଞ୍ଚମୀ ରକ୍ଷା ପଞ୍ଚମୀ । ରାତ୍ରୀର ପ୍ରଦୋଷ କର୍ମକାଳ । ଉଭୟ ଦିନ ପ୍ରଦୋଷକୁ ପଞ୍ଚମୀ ସ୍ପର୍ଶକଲେ ବା ନକଲେ ପୂର୍ବଦିନ ବିଧେୟ ଅଟେ ।

ଋଷି ପଞ୍ଚମୀ

ଭାଦ୍ର ଶୁକ୍ଳ ପଞ୍ଚମୀ ଋଷି ପଞ୍ଚମୀ । ଅପରାହ୍ଣ କର୍ମକାଳ । ଉଥ୍ର ଦ୍ୱୈଧ ହେଲେ ପୂର୍ବଦିନ ଗ୍ରାହ୍ୟ ଅଟେ ।

---

पाठा. 1) नरेन्द्र-क । 2) संघात- ग, घ, ङ । 3) मभि- ग, ङ, छ, ज ।
4) मा चलेत्यनन्तरं-"द्वारदेव नमस्तुभ्यं नमस्ते नन्दिकेश्वर । पञ्चम्यां निशि देवेश रक्ष त्वं मम मन्दिरम्" ॥ इति ख पुस्तकेऽधिकः ।

अत्र तिथिद्वैधे पञ्चमी पूर्वविद्धा ग्राह्या ।

षष्ठीयुक्ता पञ्चमी या महर्षेस्तत्र पूजने ।
पतिपुत्रहता नारी सा नारी नरकं व्रजेत् ॥ (शतानन्दः)

## श्रीपञ्चमी

माघे मासि सिते पक्षे पञ्चमी या श्रियः प्रिया ।
तस्याः पूर्वाह्ण एवेह कार्यः सारस्वतोत्सवः ॥

श्रियः सरस्वत्याः ।

"पञ्चम्यां कुन्दकुसुमैः कौन्दी पूज्या समृद्धये" ।

कौन्दी सरस्वती । "पञ्चम्यां श्रीरपि श्रिय"मितिपूर्वलिखित-वचनात् श्रीकामो माघशुक्लपञ्च[१]म्यां सरस्वतीपूजां कुर्यात ।

---

१) पञ्चम्यां तु त्रिमुहूर्त्तव्यापिन्यामेव सरस्वतीपूजा कार्या । नात्र "पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथि"रिति मध्याह्नव्याप्तिः, नापि सम्मुखी-तिथित्वेन सायाह्नव्याप्तिः, न च "अस्मद्देशशिष्टैस्तु रात्रावेव सरस्वतीपूजा क्रियते" इति कालसारोक्तेः प्रदोषव्याप्तिर्वा ग्राह्या । तस्याः पूर्वाह्ण एवेह कार्यः सारस्वतोत्सव इति पूर्वाह्णव्याप्तेः साक्षात् श्रवणात् । यत्तु कुन्दकुसुमानुरोधेन रात्रिपूजनं केषांचिन्मतं तदपि दूषणम् । सन्ध्यायां प्रस्फुटितस्य कुन्दकुसुमस्य सन्ध्यायां वा प्रदोषे वा चयनस्य निषिद्धत्वेन तत्कालचयने पूजायां विनियोगानर्हत्वादनुपयोगात् । पूर्वदिनसायं प्रस्फुटितकुन्दपुष्पसाधनकपूजापक्षे पूर्वाह्ण एव श्रेयान् । तथा समाचाराच्च । यद्यपि केषांचित् रात्रिपूजाचारः स्यात् तन्मतेऽपि गौरीव्रतन्यायेन सोदयत्रिमुहूर्त्तव्याप्तायां पञ्चम्यां रात्रौ पूजासमाचारो व्याख्येयः । श्रीजगन्नाथमन्दिरे तथा दर्शनात् । तत्र हि सूर्योदयवेधेन विहिताया वसन्तगुण्डिचायात्रायाः प्रत्यावर्त्तनात् परं सरस्वत्या अर्च्चनं

ଶ୍ରୀପଞ୍ଚମୀ

ମାଘ ଶୁକ୍ଳ ପଞ୍ଚମୀ ଶ୍ରୀପଞ୍ଚମୀ । ଏଥିର ସୋଦୟ ତ୍ରିମୁହୂର୍ତ୍ତ କର୍ମକାଳ । ଉଭୟ ଦିନ ସୋଦୟ ତ୍ରିମୁହୂର୍ତ୍ତ ହେଲେ ପୂର୍ବଦିନ ହେବ । (ଶ୍ରୀଜଗନ୍ନାଥଙ୍କ ବସନ୍ତ ଗୁଣ୍ଡିଚା ଓ ଘୋଡ଼ ଲାଗି ପ୍ରଭୃତି କାର୍ଯ୍ୟ ନିମନ୍ତେ ତଥି ସୂର୍ଯ୍ୟୋଦୟକୁ ମାତ୍ର ହେଲେ ଗ୍ରାହ୍ୟ ହେବ ।)

## षष्ठी

सा च सप्तमीयुता ग्राह्या युग्मात् ।

एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी ।

अमावास्या तृतीया च ता उपोष्याः परान्विताः ।। (वृहस्पतिः)

यदा तु कदाचित्तिथिक्षयवशात् उत्तरविद्धा न लभ्यते तदा नागविद्धा ग्राह्या ।

एकादशी तृतीया च षष्ठी चैव त्रयोदशी ।

पूर्वविद्धा तु कर्त्तव्या यदि न स्यात् परेऽहनि ।। [1]इति (वसिष्ठः)

## स्कन्दषष्ठी

ज्येष्ठमासे सितेपक्षे षष्ठी चारण्यसं[2]ज्ञका ।

[3]व्यजनैककरा[1]स्तस्यामटन्ति विपिने स्त्रियः ।।

---

भवति । कालसर्वस्वकारस्तु रात्रिपूजाचारो निर्मूल इत्याह । पण्डित-सर्वस्वकारमतेनापि तन्मन्दम् । वस्तुतस्तु क्वापि रात्रौ पूजासमाचारो नोपलभ्यते । विद्यार्थिनां बालकबालिकानां पक्षे सर्वथा असम्भवोऽपि । विशेषविचारस्तु अस्मत्कृते वसन्तपञ्चमीनिर्णये द्रष्टव्यः । अत्र श्रीजगन्नाथदेवस्य वसन्तगुण्डिचायात्रा, तत्र उदयवेधो ग्राह्यः "दैवे ह्योदयिकी ग्राह्येति" नारदीयोक्तेः । उभयदिने सूर्योदयव्याप्तौ तु पूर्वेद्युरेव, मलतिथेरकर्मण्यत्वात् । अस्मिन् दिने देवानां प्रावरणत्यागोऽपि ।

१) अत्रव्यजनधारणपरिणामित्वेन शीतलषष्ठीसंज्ञा प्रसिद्धा सा शिवविवाह-समनन्तरपरदिने विधेया । श्रीजगन्नाथमन्दिरे तु उदयव्यापिनी एव गृह्यते इति विशेषः ।

ଷଷ୍ଠୀର ଷୋଡଶ ମୁହୂର୍ତ୍ତ କର୍ମକାଳ । ପରଦିନକୁ ଷଠି ନ ଥିଲେ ଅଗତ୍ୟା ପୂର୍ବଦିନ କରାଯିବ ।

ଜ୍ୟେଷ୍ଠ ଶୁକ୍ଳ ଷଷ୍ଠୀ ଓ ଚୈତ୍ର କୃଷ୍ଣ ଷଷ୍ଠୀ ସ୍କନ୍ଦ ଷଷ୍ଠୀ । ସେ ସପ୍ତମୀ ବିଦ୍ଧା ହେବ ।

---

पाठा. 1) "इति" नास्ति- क । 2) संज्ञिता- ख, ग, घ, ङ, ज, झ ।
3) 'व्यजनैक... स्त्रियः" इति श्लोकार्द्धं नास्ति-ख, ग घ, ङ, छ, ज, ।

तां विन्ध्यवासिनीं स्कन्दषष्ठीमाराधयन्ति च ।
कन्दमूलफलाहारा लभन्ते सन्ततिं शुभाम् ॥ (राजमार्त्तण्डे)

कन्दं सूरणादि । मूलं तदितरमूलकादि । इयमेका स्कन्दषष्ठी । अपरा चैत्रकृष्णषष्ठी । व्यवस्थावचनं तत्रैव वक्ष्यामः ।

## षष्ठीदेवीषष्ठी

यया भाद्रस्य शुक्लायां षष्ठी षष्ठ्यां प्रपूजिता ।
जीवपुत्रा च सौभाग्यधनधान्यसुखान्विता ॥
तस्माद् यत्नेन नार्यश्च पूजयन्ति सदैव तु ।

अत्र विशेषेण व्यवस्थाभावात् साधारणषष्ठीन्यायेन व्यवस्था द्रष्टव्या ।

## [1]अथ प्रावरणषष्ठी

या तु मार्गशिरे शुक्ला महाषष्ठी नराधिप ।
देवद्विजसुहृद्भ्यश्च शीतघ्नं तत्र [2]दापयेत् ॥ (कूर्मपु.)

शीतघ्नशब्देन वस्त्रकम्बलपटीप्रभृतयः । अत्र सोदयत्रि[1]मुहूर्त्तव्या[3]पिकालो दानरूपत्वात् ।

---

१) अत्र सोदयत्रिमुहूर्त्तः काल इति यद्यपि ग्रन्थकारेण कालसारे च गदाधरेण दर्शितं तथापि उदयवेध एव गृह्यते "दैवे ह्योदयिकी ग्राह्येति नारदीयोक्तेः । उदयव्यापिन्यामेव श्रीजगन्नाथश्रीलिङ्गराजदेवयोर्यात्रा विधीयते । 'शीतघ्नं तत्र दापयेत्" इत्यत्र दानस्य विहितत्वात् दाने च देवलेन "यां तिथिं समनुप्राप्य उदयं याति भास्करः । सा तिथिः सकला ज्ञेया स्नानदानव्रतादिषु" इति सूर्योदयव्याप्तेर्दर्शितत्वात् सूर्योदयवेधेन व्यवस्था युज्यते ।

ଭାଦ୍ର ଶୁକ୍ଳ ଷଷ୍ଠୀ ଷଷ୍ଠୀଦେବୀ ଷଷ୍ଠୀ ବା ଷଠିଓଷା । ଏଥିରେ ସାଧାରଣ ଷଷ୍ଠୀ ନ୍ୟାୟ ପ୍ରଯୁଜ୍ୟ ଅଟେ ।

ମାର୍ଗଶିର ଶୁକ୍ଳଷଷ୍ଠୀ ପ୍ରାବରଣଷଷ୍ଠୀ ବା ଓଢଣଷଷ୍ଠୀ । ଏହିଁରେ ଉଦୟ-ବେଧ ଗ୍ରାହ୍ୟ ଅଟେ । ଏ ଦିନ ଶ୍ରୀଜଗନ୍ନାଥଦେବ ଓ ଲିଙ୍ଗରାଜଦେବଙ୍କ ଯାତ୍ରା ।

---

पाठा. 1) अथ इति नास्ति- ग,घ,ङ । 2) कारयेत्- ग,घ,ङ । 3) व्याप्ति क ।

## चैत्रकृष्णस्कन्दषष्ठी

षष्ठ्यां स्कन्दस्य कर्त्तव्या पूजा सर्वोपकारिका ।
इहैव सुखसौभाग्यमन्ते [1]विष्णुपुरं व्रजेत् ।। (देवीपु. ६१-१०)
कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी ।
तास्तु पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् ।। (वसिष्ठः)

## सप्तमी

सा च षष्ठीयुता ग्राह्या युग्मात् ।

"[१]षष्ठी तु सप्तमी यत्र अन्योन्यं च समाश्रिते ।
पूर्वविद्धा द्विजश्रेष्ठ कर्त्तव्या सप्तमी तिथिः ।" (ब्रह्मपु.)
"पञ्चमी सप्तमी चैव दशमी च त्रयोदशी ।
प्रतिपन्नवमी चैव कर्त्तव्या सम्मुखी तिथि"रिति । (पैठीनसिः)
सम्मुखी नाम सायाह्नव्यापिनी दृश्यते यदा । इति (स्कन्दपु.)

यदा पूर्वेद्युरस्तमयपर्यन्ता षष्ठी परेद्युस्तिथिक्षयादस्तमयादर्वाक् अष्टमी त्रिमुहूर्त्ता तदा पूर्वविद्धाया [2]अभावात् उत्तरविद्धायाश्च प्रतिषिद्धत्वात् कुत्रानुष्ठानमिति चेत् निषेधमुल्लङ्घ्याप्युत्तरविद्धायामनुष्ठानं ब्रूमः । शेषिलोपस्यान्याय्यत्वात् उत्तरविद्धा गौणकालत्वेन स्वीकर्त्तव्या । अतएव माध[3]वाचार्या— "आलाभे पूर्वविद्धायाः परविद्धाऽपि गृह्यतामिति ।

---

१) षष्ठीति विष्णुपुराणे इति कालसारे । विष्णुपुराणे तु न लभ्यते । भविष्यत्पुराणब्रह्मपुराणयोरिति कालमाधवे ।

ସପ୍ତମୀ

ସପ୍ତମୀ ପୂର୍ବବିଦ୍ଧା, ମାତ୍ର ସୂର୍ଯ୍ୟାସ୍ତ ପୂର୍ବରୁ ସପ୍ତମୀ ଥିବା ଆବଶ୍ୟକ । ଅନ୍ୟଥା ପରବିଦ୍ଧା ହେବ ।

---

पाठा. 1) यान्ति हरेः पुरम्—ग । स्कन्दपुरं व्रजेदिति मुद्रितदेवीपु. ।
2) अलाभात्—ग । 3) माधवीकारः—ख, ग, ङ ।

## कुक्कुटीव्रतम्

भाद्रे मासि सितेपक्षे सप्तम्यां ललितालये ।
स्नात्वा शिवं लेखयित्वा मण्डले च [1]सहाम्बिकम् ।
पूजयेच्च तदा तस्यां [2]दुष्कृतं नैव विद्यते ॥ इति (भविष्यपु.)

## माघसप्तमी

[१]सूर्यग्रहणतुल्या हि शुक्ला माघस्य सप्तमी ।
अरुणोदयवेलायां स्नानं तस्यां महाफलम् ॥ (स्मृतिसंग्रहः)
माघे मासि सिते पक्षे सप्तमी कोटिभास्करा ।
[3]नद्यां स्नानार्घ्यदानाभ्यामायुरारोग्यसम्पदः ॥
अरुणोदयवेलायां [4]स्नान तस्यां महाफलम् ।
गङ्गायां यदि लभ्येत सूर्यग्र[२]हशतैः समा ॥ (भविष्यपु.)

कोटिभास्करा इति सप्तम्या भास्करदेवताकत्वेन कोटिसप्तमीतु[5]ल्यत्वम् । [6]अत्र पूर्णसप्तम्यां पूर्वापरयोर्यत्रारुणोदयकाले सप्तमी तत्र पूर्वारुणोदयकाले स्नानम् ।

चतस्रो घटिकाः [7]पूर्वमुदयादरुणोदयः ।
यतीनां स्नानकालोऽयं गङ्गाम्भः सदृशः स्मृतः ॥

---

१) सूर्यग्रहणेति वचनं स्मृतिसंग्रहे इति कालसारे । स्मृतिसमुच्चये इति कृत्यकौमुद्याम् ।

२) सूर्यग्रहः- सूर्यग्रहणम् ।

ଭାଦ୍ର ଶୁକ୍ଳସପ୍ତମୀରେ କୁକ୍କୁଟୀ ବ୍ରତ ହୁଏ । ସପ୍ତମୀର ସାଧାରଣନିୟମ ଏଥିରେ ପ୍ରଯୁଜ୍ୟ ।

---

पाठा. 1) सहाम्बिकाम्-क । सदाम्बिकम्- ख,ङ । सहाम्बिके ग । 2) दुष्प्रापं- ख, ग । 3) नद्यां ... ... महाफलमितिश्लोको नास्ति- ज । दद्यात्- ख, ग, ङ । तस्यां-छ । 4) शुक्ला माघस्य सप्तमी- ख, ग, घ, ङ । 5) तुल्या-ख, ग, घ, ङ, भ । 6) अत्र च- ख, ङ । 7)प्रातररुणोदय उच्यते-ख, ग, घ, ङ,छ,ज । कालसारपाठोपि ।

त्रियामां[1] रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम् ।

नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते (ब्रह्मवैव.पु.)

इत्यनेन पूर्वस्य तत्कालस्य [1]पूर्वतिथिसम्बन्धिदिनकर्माङ्गत्वेन इतरस्य इतराङ्गत्वेनाभिधानात् । अतएव दक्षेण[2] तत्कालमारभ्याह्निककृत्यमभिहितम् । अत्रारुणोदयकाले मुहूर्त्तान्यूनतिथिलाभ एव स्नानम् ।

व्रतोपवासस्नानादौ घटिकैका यदा भवेत् ।

उदये सा तिथिर्ग्राह्या श्राद्धादाव[2]स्तगामिनी ।(विष्णुधर्मोत्तरपु)

अत्र घटिका [3]मुहूर्त्तम् । श्राद्धयोग्यकालानुरोधात् । अत्र माघ[3]मासनिमित्तकमाघसप्तमीनिमित्तककाम्यस्नानयोस्तु प्रातर्विधानान्नैमित्तिकत्वेन प्रायश्चित्तवत् सकृदनुष्ठानम् ।

प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः ।

तदङ्गस्याक्रियायां तु नावृत्तिर्न च तत्क्रिया । इति

कात्यायनवचनात् ।

न स्नानमाचरेद् भुक्त्वा नातुरो न महा[4]निशि ।

न वासोभिः सहाजस्रं नाविज्ञाते जलाशये ॥ इति-(मनुः ४-१२९)

---

१) रात्रेः आदिनाडीचतुष्टयं दिवसान्तसंज्ञकम् अन्तिमनाडीचतुष्टयं च दिवसादिसंज्ञकमिति अष्टाभिर्नाडीभि न्यूना रजनी त्रियामा भवति । अतस्तस्या त्रियामेति संज्ञा । रात्रेः प्रथमान्तिमयामार्द्धद्वयं दिवसवत् कर्मोपयोगीति तत् दिवसेऽन्तर्भवतीति सारः ।

२) तथा च दक्षः– उषः काले तु संप्राप्ते शौचं कुर्याद् यथार्थवत् ।

ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम् ॥ २-६

इति उषःकालमारभ्य दिवसमष्टधा विभज्य कृत्यमुपदिशति ।

3) यद्यपि ग्रन्थकारेण घटिकापदेन मुहूर्त्तं गृह्यते तथापि अत्र स्नानकर्मणि दण्ड एव ग्राह्यः । मुख्यार्थसम्भवे लक्षणाया अप्रसक्तेः ।

4) महानिशि– रात्रेः द्वितीयतृतीयप्रहरयोः । "महानिशा तु विज्ञेयं मध्यमं प्रहरद्वयमिति देवलोक्तेः ।

---

पाठा. 1) पूर्ण- ग । 2) दौ त्वस्त- भ । 3) अत्र माघमासनिमित्तक- क ।

अत्र माघमासमाघसप्तमीनिमित्तक- भ ।

वचनेन एकदाऽजस्रस्नानानिषेधाच्च निष्कामविष्णुप्रीतिकामयोः सुतरां सकृदनुष्ठानम्। स्नानमन्त्रस्तु—

यद् यज्जन्मकृतं पापं मया सप्तसु जन्मसु।
तन्मे रोगञ्च शोकञ्च माकरी[1] हन्तु सप्तमी॥
सूर्याय फलगन्धार्कपत्ररक्तप्रसूनवत्।
दद्यादुत्थाय तत्रार्घ्यं सप्त[2]धा यदि वा त्रिधा॥

अर्घ्यमन्त्रस्तु—जननि सर्वभूतानां सप्तमि सप्तस[3]प्तिके।
सप्तव्याहृतिके देवि नमस्ते रविमण्डले॥

प्रणाममन्त्रस्तु-सप्तसप्तिवह प्रीत सप्तद्वीपप्रदीपक।
सप्तम्यां च नमस्तुभ्यं नमोऽनन्ताय वेधसे॥

## अथाष्टमी

अष्टम्युपवासफलम्—

एकादशी कोटिसहस्रतुल्याऽसिताष्टमी पर्वतराजपुत्र्याः।
ततोऽपि शुक्ला गुणिता शतेन पराशरव्यासवसिष्ठमुख्यै"रिति॥
(देवीपु॰)

शुक्लपक्षे तथाष्टम्यामुपवासपरायणः।
मालती करवीरेण बिल्वपत्रैश्च पूजयेत्॥

---

१) माकरी- मकरमाससम्बन्धिनी। मकरशब्दोत्र लक्षणया चान्द्रमाघमासंबोधयति। समाचारात् शुक्लपक्षमपि! स्नानमन्त्रोयं विष्णूक्त इत्युक्तं तिथितत्त्वे, मुद्रित विष्णुस्मृतिविष्णुपुराणयोस्तु न दृश्यते।

२) सप्तधा- सप्तवारान्। त्रिधा- त्रीन् वारान्।

३) सप्तिः- अश्वः।

४) एकादशीति देवीपुराणवचनमिति कालसारे। तिथितत्त्वे च। मुद्रित-देवीपुराणे तु नास्ति।

ମାଘ ସପ୍ତମୀ ସ୍ନାନର ଅରୁଣୋଦୟ କର୍ମକାଳ। ଦୁଇ ଅରୁଣୋଦୟକୁ ଛାଡ଼ି ଥିଲେ ପୂର୍ବଦିନର ଅରୁଣୋଦୟରେ ସ୍ନାନ କରାଯିବ। ଅରୁଣୋଦୟକୁ ଛାଡ଼ି ଏକ ମୁହୂର୍ତ୍ତ ଥିବା ଆବଶ୍ୟକ ବୋଲି ଗ୍ରନ୍ଥକାରଙ୍କ ମତ। ମୋ ମତରେ ଦଣ୍ଡମାତ୍ର ଥିଲେ ହେବ।

दुर्गेति नाम जप्तव्यं पुरतोऽष्टशतं नृप ।
सर्वमङ्गलना[1]मेति जप्तव्यं किल भारत ॥ (भविष्यपु.)
उपवासं महाष्टम्यां पुत्रवान्न समाचरेत् ।
यथा तथैवं पूतात्मा व्रती देवीं प्रपूजयेत् ॥ इति

वचनात् पुत्रवतः पूजाङ्गमहाष्टमीनिमित्तकोपवासनिषेधान्नाष्टमी-निमित्तमात्रकोपवासनिषेधः । सा च शुक्ला नवमीयुता ग्राह्या युग्मात् । कृष्णा च सप्तमीयुता ग्राह्या ।

"कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी,
पूर्वविद्धैव कर्त्तव्या परविद्धा न कुत्रचित् ॥
शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी ।
पूर्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुता । (निगमः)
उपवासादिकार्येषु एष धर्मः सनातनः ॥"
"[2]चतुर्दश्यां तथाष्टम्यां पक्षयोः शुक्लकृष्णयोः ।
योऽब्दमेकं न भुञ्जीत शिवार्च्चनपरो नरः ॥
यत् पुण्यमक्षयं प्रोक्तं सततं सत्रयाजिनाम् ।
तत् पुण्यं सकलं तस्य शिवलोकं स गच्छति ॥ (भविष्यपु.)

सततसत्रयाज्यक्षयपुण्यप्राप्तिः शिवलोकगतिश्च फलम् । फाल्गुनशुक्लाष्टमीचतुर्दश्योरारभ्य वर्षं यावत् प्रत्यष्टमि प्रतिचतुर्दश्युपवासव्रतम् ।

अष्टमीं समुपोष्यैव नवम्यामपरेऽहनि ।
मत्स्यमांसोपहारेण दद्यान्नैवेद्यमुत्तमम् ।
तेनैव विधिनान्नं तु स्वयं भुञ्जीत नान्यथा ॥ इति (देवीपु.)

वचनादष्टम्युपवासपारणे मत्स्य[1]मांसपा[2]रणं कार्यम् ।

---

१) वस्तुतस्तु मत्स्यमांसपारणं मत्स्यमांसाशिनामेव, यैः यावज्जीवमामिष-वर्जनं कृतं न तेषां कृते सात्त्विकपूजायां तादृशवस्तुनः अनुपयोगात् । "सात्त्विकी जपयज्ञाद्यैर्नैवेद्यैश्च निरामिषै"रिति स्कन्दभविष्ययो-रुक्तत्वात् ।

---

पाठा. 1) कामेति- ङ । 2) भक्षणं- ख, ग, घ, भ ।

अष्टम्यां च नवम्यां च [1]पूजा कार्या विवृद्धये ।
पटेषु प्रतिमायां वा घटे मङ्गलचण्डिकाम् ।।
यः पूजयेद् भौमवारे शुभैर्दूर्वाक्षतैः शिवा[2]म् ।
[१]बहुशः साधकः सोऽपि काममिष्टमवाप्नुयात्" । (कालिकापु.)
'शनैश्चरस्य वारेण वारेणाङ्गार[२]कस्य च ।
कृष्णाष्टमीचतुर्दश्यौ पुण्यात् पुण्यतरे स्मृते" । (ज्योतिषम्)
तथा— सोमवारेऽप्यमावास्या आदित्याहे तु[3] सप्तमी ।
चतुर्थ्यङ्गारके चैव अष्टमी च वृहस्पतौ ।।
अत्र यत् क्रियते पापमथवा धर्मसञ्चयः ।
षष्टिजन्मसहस्राणि प्रतिजन्म तदक्षयम् ।। (ज्योतिषम्)

## अशोकाष्टमी

मीने मधौ शुक्लपक्षे अशोकाख्या[4] तथाष्टमी ।
पिबेदशोककलिकाः स्नायाल्लौहित्यवारिणि ॥ (स्कन्दपु.)

अशोकाख्या[5]ष्टमीत्युपादानात्तिथिमात्रे[6]ऽपि तत् कार्यम् । फल तु मन्त्र-लिङ्गात् शोकरहितत्वमवगन्तव्यम् । लौहित्यवारिणि- ब्रह्मपुत्राख्यनद जले । पुनर्वसुयोगे तु फलाधिक्यमाह—

अशोककलिकाश्चाष्टौ ये पिबन्ति पुनर्वसौ ।
चैत्रे मासि सिताष्टम्यां न ते शोकमवाप्नुयुः ।।

---

१) बहुशः इष्टम् अवाप्नुयात् इत्यन्वयः ।
२) अङ्गारकः—मङ्गलग्रहः । तस्य वारेण युक्ता कृष्णाष्टमी कृष्णचतुर्दशी च पुण्यतरा तथा शनैश्चरवारयुक्तापि ।

ଅଷ୍ଟମୀ ଶୁକ୍ଳପକ୍ଷରେ ମଙ୍ଗଳଯୁକ୍ତା ଓ କୃଷ୍ଣପକ୍ଷରେ ବୁଧଯୁକ୍ତା ହେବ ।

---

पाठा. 1) पूजां कुर्याद्-ग । 2) शिवम्-क, ख । 3) च, झ । 4) शोकाख्यां च तथाष्टमीम्-ख, ग, छ, ज, झ । अशोकाख्यां तथाष्टमीम्- घ,ङ । 5) ख्याष्टमीमित्युपादानात्- घ । ख्यामित्युपादानात्- ङ । ख्याष्टमी-मित्युपादानाच्च- छ, ज, झ । 6) त्रेऽपि तत् पानम्- ग, ङ, झ । त्रे तत् पानम्- ख, घ ।

मन्त्रश्च—त्वामशोक हराभीष्ट [1]मधुमाससमुद्भव ।

पिबामि शोकसन्तप्तो मामशोकं सदा कुरु । इति (लैङ्गगारुडयोः)

पौराणिकमन्त्रत्वात् स्त्रीशूद्रैरप्ययं मन्त्रः पठनीयः । स्त्रीकर्त्तृकपा[1]ठे न प्रकृतावपूर्वत्वादिति न्यायादूहाभावः । एतत् पानं भ्रातृद्वि[2]तीयोक्त-भोजनवत् पञ्चमभागव्यापिन्यामष्टम्यां [2]कर्त्तव्यम् ।

पुनर्वसुबुधोपेतां चैत्रे मासि सिताष्टमीम् ।
स्रोतःसु विधिवत् स्नात्वा वाजपेयफलं लभेत् ।
अशोकैरर्च्चयेद्दुग्रमशोककलिकाः पिबेत् ॥

---

१) हराभीष्ट-हरप्रिय । गारुडे 'श्राष्टौ' स्थाने 'ह्यष्टौ' इति पाठः १-१३३-१.२ ।

२) ग्रन्थकर्त्तुरयं विचारो नैव मनोरमः । अशोककलिकापानं नैव भोजनं तत्र विधिमन्त्रयोः पानशब्दश्रवणात् स्वल्पकालवर्त्तिद्वादशीपारणावत् तस्य पानस्य अशितानशितरूपत्वात् भोजनप्रतिनिधित्वाभावाच्च । अशोककलिकामिश्रजलगण्डूषपानानन्तरमन्नादिकमप्यश्नन्ति शिष्टाः । तेन भ्रातृद्वितीयाभोजनाशोककलिकापानयोर्महद् वैषम्यम् । ततः पूर्वाह्ल-व्यापिन्यामेव "शुक्लपक्षेऽष्टमी चैवेति निगमोक्त्या अशोककलिकापानं युज्यत इत्यस्मन्मतं सुधीभिरादरणीयम् । कालसर्वस्वकृता कृष्णमिश्रेणापि दिवसपञ्चमभागं निषिध्य "नवा क्वापि तथाचार इत्युक्तम्" । श्रीलिङ्गराजदेवस्य यात्राप्यत्र सूर्योदयव्यापिन्यामेव "दैवे ह्यौदयिकी ग्राह्या" इति नारदीयोक्तेः ।

ଅଶୋକାଷ୍ଟମୀ

ଚୈତ୍ର ଶୁକ୍ଳାଷ୍ଟମୀ ଅଶୋକାଷ୍ଟମୀ । ଗ୍ରନ୍ଥକାରଙ୍କ ମତରେ ଅଷ୍ଟଧା ବିଭକ୍ତ ଦିବସର ୫ମ ଭାଗ ଏହାର କର୍ମକାଳ ଯେଣୁ କଳିକା ପାନ ଭୋଜନ ସ୍ଥାନୀୟ । (ମୋ ମତରେ କଳିକା ପାନ ଭୋଜନ ପ୍ରତିନିଧି ନୁହେ ତାହା ଦେବପାଦୋଦକ ପାନ ସଦୃଶ । ଏଣୁ ଉଦୟରୁ ତ୍ରିମୁହୂର୍ତ୍ତ ଏହାର କର୍ମକାଳ । କିନ୍ତୁ ଲିଙ୍ଗରାଜ-ଦେବଙ୍କ ଯାତ୍ରା ନିମନ୍ତେ ସୂର୍ଯ୍ୟୋଦୟ ବେଧ ଗ୍ରାହ୍ୟ ଅଟେ ।)

---

पाठा. 1) पाने भ । 2) नास्ति- भ ।

## जन्माष्टमी व्रतम्

तत् नित्यं काम्यं च । अकरणे प्रत्यवायश्रवणाद् वीप्सा[1]श्रवणाच्च नित्यम् ।

"[2]श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम् ।
न करोति नरो यस्तु भवति ब्रह्मराक्षसः ।।
[3]वर्षे वर्षे भागवतो मद्भक्तो धर्मनन्दन । इति[1] वीप्साश्रवणाच्च ।
पुत्रसन्तानमारोग्यं धनधान्यर्द्धिमद् गृहम् ।।
[4]शालीक्षुयवसम्पूर्णमण्डलं सुमनोहरम् ।
तस्मिन् राष्ट्रे प्रभु भुंङ्क्ते दीर्घायुर्मनसेप्सितान् ।।
[5]परचक्रभयं नास्ति तस्मिन् राष्ट्रेऽपि पाण्डव ।
पर्जन्यः कामवर्षी स्यादीतिभ्यो न भयं भवेत् ।"(भविष्योत्तरपु.)

"[2]पुत्रानवाप्य समुपैति पदं स विष्णो"रित्यादिफलश्रवणात् काम्यं च । सैव जन्माष्टमी रोहिणीयोगगुणयोगेन जयन्तीसंज्ञां लभते । न च[3]

---

१) वीप्सादयो नित्यत्वप्रतिपादका भवन्ति- नित्यं सदा यावदायुर्वीप्सा योगः फलाश्रुतिः । प्रत्यवायोनुकल्पश्चेत्यष्टौ नित्यत्वबोधकाः । इति
अत्र योगः व्यतिक्रमाभावः । यस्य कर्मणः करणे फलाभावः अकरणे प्रत्यवायः, असामर्थ्ये चानुकल्पविधानं तन्नित्यमिति सारः ।

२) श्रावणे इत्यादि वचनं प्रत्यवायप्रतिपादकम् । अत्र श्रावणमासः दर्शान्तमासापेक्षया । बहुले पक्षे—कृष्णपक्षे ।

३) वर्षे वर्षे इति वचनं वीप्साद्वारा नित्यत्वसाधकम् ।

६) हेमन्तपक्वं धान्यं शालि ।

७) परचक्रभयं—शत्रुसेनाभयम् । पर्जन्यः—मेघः । ईतिः—कृषिबाधा । तथा चोक्तम्—

"अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः खगाः ।
प्रत्यासन्नाश्च राजानः षडेते ईतयः स्मृताः ।। इति ।

---

पाठा. 1) इति वीप्साश्रवणाच्च इति पाठो नास्ति-क । धर्मनन्दन इति-ज ।
2) तथा पुत्रा- घ, भ । 3) "च" इति नास्ति- घ ।

संज्ञया [1]कर्मभेद. ।

[1]ऐकान्तिकोत्पत्तिवाक्यं प्रति निर्णयाभावेन भेदबीजाभावाद दाक्षायणादिवद् गुणाः संज्ञापनि .द्धा इति नीत्याऽभेदेन उपपत्तौ भेदस्याऽपूर्वभेदापादकस्याकल्पनात् ।

भेदे च पूर्वदिने अष्टमीनिशीथव्याप्तावपि—

उदये चाष्टमी किञ्चिन्नवमी सकला यदि ।
सा भवेद् बुधसंयुक्ता प्राजापत्यर्क्षसंयुता ॥
अपि वर्षशतेनापि लभ्यते वा न वा विभो । (स्कन्दपु.)

तथा— [2]मुहूर्तमप्यहोरात्रे यस्मिन् युक्तं हि लभ्यते ।
अष्टम्यां रोहिणीऋक्षं तां पुण्यां समुपावसेत् ॥ (विष्णु रहस्यम्)

---

१) संज्ञाभेदेन हि कर्म भिद्यते। अत्र जन्माष्टमीजयन्त्यौ भिन्नसंज्ञिके। ततः तदद्वयं व्रतद्वयमस्तु इति शङ्कां निराकरोति न चेति। ऐकान्तिकं नाम एकमेव उद्दिश्य यत् प्रस्तुतम्। तादृशं यत् उत्पत्तिवाक्य व्रतविधायकं वाक्यं तत् प्रति निर्णयाभावेन अर्थात् जयन्ती प्रतिपादकं वचनमन्यत् जन्माष्टमीप्रतिपादकं वचनमन्यत् इति निर्णयाभावात् भेदाभावः। जयन्त्या निर्वचनमुक्तं ब्रह्मवैवर्त्ते—

'जय पुण्य च कुरुते जयन्ती तेन संस्मृता इति ब्र.वै.पु. ४.८.५२।

२) ब्रह्मवैवर्त्तेऽपि "भवेद्बुधेन्दुसंयुक्तेति विशेष" (ब्र वै. ४.८.१३)

---

पाठा- 1) ऐकान्तिकोत्पत्तिवाक्यगतनिर्णयाभावेन भेदबीजाभावाद्दाक्षायणादिवत् गुणाः संपबद्ध इति नित्याभेदेन उपपत्तावभेदस्यापूर्वभेदा- ख।

ऐकान्तिकोत्पत्तिवाक्यगतानिर्णयाभावेन भेदबीजाभावाद्दाक्षायणादिवद्गुणादिसंज्ञोपबन्धनमितिभेदेन उपपत्तावभेदस्यापूर्वभेदकस्याकल्पनात्- घ।

ऐकान्तिकोत्पत्तिवाक्यं प्रति निर्णयाभावेन भेदबीजाभावाद्दाक्षायणीत्यादिवद्गुणाः संज्ञोपबन्धनीया भेदेनोपपत्तावभेदस्यापूर्वभेदापादकस्याकल्पनात्-ङ।

ऐकान्तिकोत्पात्तबाक्यगतनिर्णयाभावेन भेदबीजाभावाद्दाक्षायणादिवद्गुणाः संज्ञोपबन्ध इति नित्याभेदेनोपपत्तावभेदस्या पूर्वभेदकस्याकल्पनात्-भ।

इत्युक्तरी[1]त्या उत्तरदिने जयन्तीकरणे पूर्वदिने जन्माष्टमीव्रतं पृथक् कर्त्तव्यं स्यात। न चेष्टापत्तिः, समाचारविरोधात्। द्वयोर्नित्यत्वे त्यागे मानाभावात्। भेदपक्षे चोत्तरदिने जन्माष्टमीव्रतस्य कालाभावात्। तस्मात्– प्रेतयोनिगतानां तु प्रेतत्वं नाशितं नरैः।

यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता॥

किं पुनर्बुधवारेण सोमेनापि विशेषतः। इति वचनात् (पद्मपु.) ब्रह्मपुराणे तु[2] केवलाष्टम्यां फलश्रवणात्।

मासि भाद्रपदे कृष्णपक्षेऽष्टम्यां कलौ युगे।

अष्टाविंशतिमे जातः कृष्णोऽसौ देवकीसुतः॥ (ब्रह्मपु.)

"तस्मात स तत्र सम्पूज्य१" इति वच[3]नात् रोहिणीयोगबुधवारादियोगयो[4]रेव फलसम्बन्धः।

[5]यथा सूर्यग्रह[6]स्य सूर्यवारे २चूडामणिसंज्ञत्वेऽपि तद्विहितकर्मणो गुणादेव फलम्। तेन जन्माष्टमीव्रतमेव केवलाष्टम्यां क्रियमाणं यावत्

---

१) अथ भाद्रपदे मासि कृष्णाष्टम्यां कलौ युगे। अष्टाविंशतिमे जातः कृष्णो सौ देवकीसुतः।

भारावतारणार्थाय क्षत्रियाणां क्षयाय च। तस्मात् स तत्र सम्पूज्यो यशोदा देवकी तथा॥ इति कल्पतरौ (नियत ३९५)।

२) चूडामणियोगमाह व्यासः–

"रविग्रहे सूर्यवारे सोमे सोमग्रहे तथा।
चूडामणिरिति ख्यातस्तत्रानन्तफलं भवेत्॥
वारेष्वन्येषु यत् पुण्यं ग्रहणे चन्द्रसूर्ययोः।
तत् पुण्यं कोटिगुणितं ग्रस्ते चूडामणौ स्मृतम्॥

रविग्रहे- सूर्यग्रहणे। सोमग्रहे- चन्द्रग्रहणे।

---

पाठा. 1) नीत्या- ख, ग। 2) च- घ, झ। 3) नास्ति- क, घ, झ।

4) योगयोर्गुणयोरेव-ख, ग, घ, ज, झ। योगयोर्गुणयोरेव सम्बन्धः- ङ। अष्टमीरोहिणीयोगयोरेव फलसम्बन्धः- छ।

5) तथा- ङ। 6) ग्रहणस्य- ग, ङ।

फलं रोहिणीयोगे तदधिकफलं बुधवा[1]रसोमवारे ततो[2]ऽधिकफलमित्यवसेयम् ।

तत्र— अर्द्धरात्रादधश्चोर्ध्वं कलयाऽपि यदा भवेत् ।
[1]मुहूर्त्तो विजयो नाम यत्र जातो जनार्दनः ॥ इति (ब्रह्मपु.)

वचनात् पूर्वापरदण्डद्वयोपेतमर्द्धरात्रमत्र मुख्यक[3]र्मकालः ।

यत्र संवत्सरे रोहिणीयोगो नास्ति तत्र शुद्धाष्टम्यां न सन्देहः ।

विद्धा चतुर्द्धा । पूर्वेद्युरेव निशीथव्यापिनी । उत्तरेद्युरेव निशीथव्यापिनी । उभयत्र निशीथव्यापिनी । उभयत्रानिशीथव्यापिनी चेति । प्रथमायां पूर्वदिने व्रतम् । द्वितीयायां द्वितीयदिने व्रतम् । तृतीयचतुर्थयोरेव उत्तरदिने व्रतं संकल्पमारभ्य सर्वक[4]र्मकालस्या[5]ष्टमीसम्बन्धात् ।

रोहिणीसहिताष्टम्यां विशेषः । अष्टमीषष्टिदण्डमिता तत्र सम्पूर्णरोहिणीयोगः । अथवार्द्धरात्रे रोहिणीयोगः । अथवाहोरात्रमध्ये यत्किञ्चिन्मुहूर्त्तयोगः । इति त्रिधा शुद्धाष्टमी । तत्र न सन्देहः, रोहिणीयुताष्टम्यन्तराभावात् ।

एवं सप्तमीविद्धाष्टमी त्रिधा भवति रोहिणीयोगत्रैविध्येन । तत्राप्युत्तरदिने रोहिणीयोगाभावेन पूर्वैवोपोष्या मुहूर्त्तमप्यहोरात्र इति वचनात् ।

शुद्धाष्टमी दिनद्वयेऽपि [6]वर्द्धते चेत् तदा शुद्धाधिका भवति । सा त्रिविधा । पूर्वेद्युरेव रोहिणीयुता । परेद्युरेव रोहिणीयु[7]ता । उभयत्र रोहिणीयुता चेति । प्रथमे पूर्वेद्युः । द्वितीये परेद्युः । तृतीये पूर्वेद्युरेव [8]उभयदिनार्द्धरात्रेऽष्टम्या अभावात् तिथेर्मुख्यत्वात् ।

---

१) ब्रह्माण्डपुराणेऽपि विजयमुहूर्त्ते कृष्णजन्म उक्तम्—
"अभिजिन्नामनक्षत्रं जयन्ती नाम शर्वरी ।
मुहूर्त्तो विजयो नाम यत्र जातो जनार्दनः ॥ ब्रह्माण्ड(२/३/७१/२०५-२०६)

---

पाठा. 1)बुधवारे-ख 2)तोऽप्यधि-क,ङ,झ । 3)कर्म- नास्ति ङ । 4)सर्वकाल-क । 5)स्याप्यष्ट- घ । 6)वर्त्तते- ख, झ । 7)युक्ता- ग, ङ । 8)उत्तर-ख ।

"उदये चाष्टमी किञ्चि[1]न्नवमीति" वाक्येन द्वितीयदिने कर्त्तव्यमिति चे[2]न्न, तस्य रोहिणीयोगाभावपरत्वेऽप्युपपत्तेः ।

निशीथादर्वाक् सप्तम्यायुता परेद्युरपि विद्यमाना विद्धाधिका । तत्रापि पक्षत्रयम । पूर्वेद्युरेव रोहिणीयुक्ता, परेद्युरेव रोहिणीयुक्ता, उभयत्र तथेति च । प्रथमे पूर्वविद्धाग्राहकवचनात् पूर्वविद्धैव । परेद्युरेव रोहिणीयोगे परत्रोपवासः । "मुहूर्त्तमप्यहोरात्रे" [3]इति वचनात् ।

उभयत्र रोहिणीयुक्ता वि[1]द्धाधिका चतुर्द्धा भिद्यते । पूर्वेद्युरेव निशीथे तिथिनक्षत्रयोगवती । परेद्युरेव निशीथे तिथिनक्षत्रयोगवती । उभयत्र तिथि[4]नक्षत्रयोगवती । उभयत्र तद्योगरहिता च । प्रथमायां पूर्वैवोपोष्या ।

सप्तमी सहिताष्टम्यां निशीथे रोहिणी यदि ।
तत्रोपवासं कुर्वीते'ति वचनात् ।

( [5]अवशिष्ट पक्षत्रये परत्रैवोपवासः ) दिनद्वये निशीथयोगवत्यां संकल्पावधिसर्वकर्मकाले रोहिणीसहिताष्टमीयोगस्य विद्यमानत्वात्

"सा[2] सर्क्षापि न कर्त्तव्या [6]सप्तमीसहिताष्टमी"ति (ब्रह्मवै.पु.) वचनात् [7]परेद्युः । परेद्युरेव निशीथयोगवत्यां परत्रैवोपवासः ।

---

१) विद्धा चासौ अधिका चेति विद्धाधिका । अधिका नाम उभयदिने कर्मकालव्याप्तिसम्भावनादायिनी षष्टिदण्डाधिका च । यस्याँ तिथौ सूर्योदयस्त्वेको दिनद्वये कर्मकालसम्बन्धश्च सा विद्धाधिका । सूर्योदयद्वयसम्बन्धे तु शुद्धाधिका इति निष्कर्षः ।

२) ब्रह्मवैवर्त्ते सम्पूर्णः श्लोकः—

"वर्जनीया प्रयत्नेन सप्तमीसहिताष्टमी ।
सा सर्क्षापि न कर्त्तव्या सप्तमीसहिताष्टमी"ति (४-८-५५)

---

पाठा. 1) ञ्चिदिति वाक्येन- ग,घ,ङ,झ । 2) त्तन्न, तस्य पूर्वदिने रोहिणी- झ । 3) इत्यादि- ङ, झ । 4) तद्योगवती- ग, घ, ङ, झ । 5) ख, ग, झ पाठः । 6) रौहिणीसहिता- क । 7) परेद्युरिति नास्ति- ग, घ, ङ ।

दिनद्वये निशीथयोगराहित्यं त्रिधा भवति। पूर्वेद्युरेव निशीथादूर्ध्वं तिथिनक्षत्रद्वयं प्रवृत्तं परदिने निशीथादर्वाक् समाप्तमित्येकः प्रकारः, तत्र परत्रोपवासः, निशीथे योगाभावेऽपि संकल्पकालमारभ्य योगस्य सत्त्वात्।

[1]पूर्वेद्यू रोहिणी महती परेद्युः स्वल्पा निशीथादूर्ध्वं प्रवृत्तत्वादष्टमी पूर्वदिने स्वल्पा [2]परदिने भूयसीति दिनद्वयेऽत्र[3] निशीथे योगो नास्ति एव द्वितीयः प्रकारः। तत्र परत्रैवोपवासः।

सप्तमीसहिताष्टम्यां भूत्वा ऋक्षं द्विजोत्तमः।

[1]प्राजापत्यं द्वितीयेऽह्नि मुहूर्त्तार्द्धं भवेद्यदि।

तदाष्टयामिकं पुण्यं चोक्तं व्यासादिभिः पुरा॥ इति (स्कन्दपु.) वचनात्।

यदा पूर्वदिने अष्टमी भूयसी परेद्युः स्वल्पा, रोहिणी[4] निशीथादूर्ध्वं प्रवृत्तत्वात् पूर्वदिने स्वल्पा परदिने भूयसी तदापि [5]परदिने उपवासः।

पूर्वविद्धाष्टमी या तु उदये नवमी दिने।

मुहूर्त्तमपि संयुक्ता सम्पूर्णा चाष्टमी भवेदि'ति(पद्मपु.)वचनात्।

अथ— उदये चाष्टमी किञ्चिन्नवमी सकला यदि।

सा भवेद् बुधसंयुक्ता प्राजापत्यर्क्षसंयुता॥ इति (स्कन्दपु.) वचनात्।

बुधवारयोगनिमित्त एवाष्टम्यल्पत्वेऽपि परविद्धा स्वीकारः [6]प्रतीयते इति चेत्, अस्य यथाप्राप्तजन्माष्टम्यनुवादेन बुधवारयोगप्राशस्त्यकथनपरत्वात् "उदये चाष्टमी किञ्चिदि'त्यस्यानुवादविशेषणत्वेनाविवक्षितत्वात्। तथा च "प्रेतयोनिगतानां च" इत्यादिवाक्यसमानार्थत्वमेव। अतएवास्य बुधवारयोगपरत्वात् शुद्धाधिकायां पूर्वदिनेऽर्द्धरात्रेऽष्टमीयोगसत्त्वे पूर्वदिनप्राप्तेर्न बाधकत्वम् [7]अर्थवादपरत्वात्।

---

१) प्राजापत्यं– रोहिणी।

---

पाठा. 1) पूर्वदिने- ग,ङ,भ। 2) परेद्युर्महती- ङ। 3) त्र- च क। 4) रोहिणी तु- घ, ङ। 5) परत्रैवो- घ, ङ। 6) प्रतिभाति-ख, ग, घ, ङ,भ। 7) अर्थपर– ग, भ। अन्यपर–घ, ङ।

विद्धाधिकायां तु पूर्वदिनेऽर्द्धरात्रेऽष्टमीयोगाभावेन "पूर्वविद्धाष्टमी या त्वि"ति वचनेनोत्तरदिनस्यार्द्धरात्रयोगाभावेऽपि ग्राह्यत्वमिति विशेषः ।

[१]तेन माधवाचार्य्यानुसारेण उक्तेष्वेव जयन्तीभेदेषु वारयोगेन प्राशस्त्यं, न तु वारयोगानुसारेण व्यवस्थेति सिंहवाजपेयिनः[1] ।

## [2]अथ जयन्तीपारणे विशेषः

[२]तिथिनक्षत्रनियमे तिथिभान्ते च पारणम् । (सुमन्तुः)

[३]सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते ।

अन्यथा पुण्यहानिः[3] स्याद्दते [4]पारणधारणात् ॥ (ब्रह्मवै.पु )

एवं च सति विद्धाभेदेषु यत्र दिवा तिथ्यन्तो भान्तो वा तदाऽन्यतरान्ते पारणम् ।

---

१) यथा वारयोगेन व्यवस्था न क्रियते तथा उत्कलदेशे साम्प्रतिकस्मार्त्त-परम्परायां रोहिणीयोगेनापि स्वतन्त्रा व्यवस्था नाचर्यते । केवलमष्टम्या निशीथयोगेन ग्राह्यतिथिर्निरूप्यते । श्रीजगन्नाथमन्दिरेऽपि तथैव समाचारः ।

२) तिथिनक्षत्रनियमे तिथिभान्ते च पारणम् ।

अतोन्यथापारणे तु व्रतभङ्गमवाप्नुयात् ॥ इति कालमाधवे सम्पूर्णः श्लोकः

३) अन्यथा फलहानिः स्मात् कृते धारणापारणे" इति मुद्रितब्रह्मवैवर्त्ते ४-८-५९

### ଜନ୍ମାଷ୍ଟମୀ

ଭାଦ୍ର କୃଷ୍ଣାଷ୍ଟମୀ ଶ୍ରୀକୃଷ୍ଣଜନ୍ମାଷ୍ଟମୀ । ତହିଁରେ ରୋହିଣୀ ନକ୍ଷତ୍ରଯୁକ୍ତ ହେଲେ ଜୟନ୍ତୀ ହୁଏ । ଜନ୍ମାଷ୍ଟମୀରେ ପୂର୍ବାପରଦଣ୍ଡଦ୍ୱୟୋପେତ ନିଶୀଥ କର୍ମକାଳ ଅଟେ । ଦୁଇଦିନ କର୍ମକାଳକୁ ଛୁଇଁ ଥିଲେ ବା ଦୁଇଦିନ କର୍ମକାଳକୁ ଛୁଇଁ ନ ଥିଲେ ପରଦିନ ବ୍ରତ କରିବେ ।

ଜୟନ୍ତୀ ସ୍ଥଳରେ ଯଦ୍ୟପି ନିରୂପଣରେ ତିଥି ଓ ନକ୍ଷତ୍ର ପ୍ରଯୁକ୍ତ ବୈଶିଷ୍ଟ୍ୟ ଗ୍ରନ୍ଥକାର ଦର୍ଶାଇଥିଲେହେଁ ବର୍ତ୍ତମାନ ଓଡ଼ିଶାର ସ୍ମାର୍ତ୍ତ ପରମ୍ପରାରେ ତଥା ଶ୍ରୀଜଗନ୍ନାଥ ମନ୍ଦିରରେ ତାହା ପାଳିତ ହେଉନାହିଁ ।

---

पाठा. 1) यिनः इति–ग । 2) अथेति पंक्ति र्नास्ति-ग, घ, ङ । पारणम्–ग,घ,झ । 3) सिद्धिहानिः-झ । 4) धारणापारणात्-ख,घ, ङ, झ ।

तिथिनक्षत्रसंयोगे उपवासो यदा भवेत् ।
पारणं तु न कर्त्तव्यं यावन्नैकस्य संक्षयः ॥ (नारदपु.)

यदा त्वन्यतरान्तोऽपि दिवा न लभ्यते पूर्वदिनेऽर्द्धरात्रमारभ्य प्रवृत्तयोः तिथ्यृक्षयोरुत्तरदिने रात्रिप्रहरव्यापित्वात्तदा रात्रावपि पारणं [1]प्रतिप्रसववचनात् ।

तिथ्यृक्षयोर्यदा छेदो नक्षत्रान्तमथापि वा ।
अर्द्धरात्रेऽपि वा कुर्यात् पारणं त्वपरेऽहनि ॥ इति

[1]रात्रावपि शब्दार्थः । एवञ्च—

जयन्त्यां पूर्वविद्धायामुपवासं समाचरेत् ।
तिथ्यन्ते चोत्सवान्ते वा व्रती कुर्यात्तु पारणम् ॥ (गरुडपु.)

इत्येतदशक्तस्य प्रातरेव पूजापूर्वकं व्रतं समाप्य व्रतरूपोत्सवान्ते प्रातः पारणं [2]कुर्यात् ।

## दूर्वाष्टमी—व्रतम्

अत्र पूर्वोक्तेषु पक्षेषु व्रतसामान्यव्यवस्थया पूर्वेद्युरेव व्रतानुष्ठानम् । [3]पूर्वेद्युरेवोदयादित्रिमुहू[4]र्त्तव्याप्तौ तिथिसाम्यवृद्ध्योरपि पूर्वविद्धैव

१) निषिद्धस्य पुनरभ्यनुज्ञानं प्रतिप्रसवः ।
"सर्वेष्वेवोपवासेषु दिवापारणं"मिति एवकारेण रात्रिपारणं निषिध्यते तच्च "अर्द्धरात्रेऽपि वा कुर्यादिति पुनश्च विधीयत इति प्रतिप्रसवः" ।

ଜୟନ୍ତୀ ପାରଣ

ତିଥି ନକ୍ଷତ୍ର ପ୍ରଯୁକ୍ତ ଜୟନ୍ତୀ ଉପବାସରେ ଦିବାଭାଗରେ ତିଥି ଓ ନକ୍ଷତ୍ର ଉଭୟଙ୍କ ସମାପ୍ତି ପରେ କିମ୍ବା ତିଥି ବା ନକ୍ଷତ୍ର ମଧ୍ୟରୁ ଗୋଟିକର ସମାପ୍ତି ପରେ ପାରଣ କରିବ । ଦିନଭାଗରେ ଯଦି ତିଥି ଓ ନକ୍ଷତ୍ର ଦୁଇଟିରୁ ଗୋଟିକର ସମାପ୍ତି ନ ହୁଏ ତେବେ ସେ ସ୍ଥଳରେ ରାତିରେ ମଧ୍ୟ ଗୋଟିକର ସମାପ୍ତି ପରେ ପାରଣ କରାଯିବ । ଅଶକ୍ତ ପକ୍ଷେ ଉତ୍ସବାନ୍ତରେ ଅର୍ଥାତ୍ ଉପବାସର ପରଦିନ ସକାଳେ ତିଥି ଓ ନକ୍ଷତ୍ରର ସମାପ୍ତି ହୋଇ ନ ଥିଲେ ମଧ୍ୟ ପାରଣ କରିବ ।

पाठा. 1) रात्रावपीत्यपिशब्दार्थःघ । रात्रावपीति शब्दार्थः-ग । 2) कुर्यात् इति नास्ति-ङ । 3) परेद्युरे- ख,ग,घ,ङ,झ । 4) हूर्त्ता- घ ।

ग्राह्या

श्रावणी दुर्गनवमी तथा दूर्वाष्टमी च या ।
पूर्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम् ॥ इति (नारदः)

एवकारयुक्तवचनात् ।

"मासि भाद्रपदे शुक्ले या भवेदष्टमी नृप ।
दूर्वाष्टमीति विज्ञेया पूर्वविद्धा प्रशस्यते ॥
शुक्लाष्टमी तिथिर्या तु मासि भाद्रपदे भवेत् ।
दूर्वाख्या साष्टमी ज्ञेया नोत्तरा सा विधीयते ॥[1] इति वचनाच्च ।

अत्र दूर्वापूजा नित्या काम्या च ।

प्राप्ते भाद्रपदे मासि शुक्लाष्टम्यां च भारत ।
या न पूजयते दूर्वां मोहादिह यथाविधि ॥
त्रीणि जन्मानि वैधव्यं लभते नात्र संशयः ।
तस्मात् सम्पूजनीया सा प्रतिवर्षं वधूजनैः ॥
सुख[1]सन्तानजननी भ्रातृसौभाग्यदा सदा ।
ब्रह्मन् भाद्रपदे मासि शुक्लाष्टम्यामुपोषितः ॥
महेशं पूजयेद्यस्तु दूर्वया सहितं वने ।

इति भविष्यपुराणे दूर्वासहितमहेशपूजा विहिता ।।[2]

## भाद्रशुक्लाष्टम्यां दुर्गाशयनम्

सर्वदैवोत्थिता तिष्ठेद् दुर्गा लोकहिताय वै ।
स्वपेद् भाद्रसिताष्टम्यां त्रिपञ्चदिवसात् परम् ॥

---

१) सुखसन्तानं सुखपरम्परा ।
२) सम्प्रति उत्कलदेशे अस्य व्रतस्य समाचारो नास्ति ।

ଭାଦ୍ର ଶୁକ୍ଳାଷ୍ଟମୀ ଦୂର୍ବାଷ୍ଟମୀ ତାହା ପୂର୍ବବିଦ୍ଧା ।

ଭାଦ୍ର ଶୁକ୍ଳାଷ୍ଟମୀରେ ଦୁର୍ଗାଙ୍କ ଶୟନ ବିଧେୟ । ତାହା ପରବିଦ୍ଧା । କର୍ମକାଳ ପ୍ରଦୋଷ । ଶୟନ ପରିମାଣ ଦ୧୫ନରୁ ଅଧିକ ହେବ ନାହିଁ । ତିଥି କ୍ଷୟ ହେଲେ କରିପାରେ ।

---

पाठा. 1) इत्यादि ग, घ, ङ, झ ।

उत्तिष्ठत्यर्च्चिता देवी षोडशेऽह्नि न रात्रितः ।
[३]दिवा स्वापे भवेद्रोगो निश्युत्थाने जनक्षयः ॥
दिनक्षयो यदि भवेत् स्वपेद् घस्रांश्चतुर्दश ।
न वर्द्धयेत् स्वापदिनं तिथिवृद्धौ कदाचन ॥ इति ॥ (भगवतीपु)

## शरत्कालीन-दुर्गापूजा

"[२]एवं च यजनं कुर्याद् वर्षे वर्षे युधिष्ठिर ।
यो वै न पूजयेत् सम्यक् चण्डिकां भक्तवत्सलाम् ॥
भस्मीकृत्यास्य पुण्यानि निर्दहत्यवमानिता ॥" (देवीपु॰)
"[३]यदा दैववशादस्मिन् मासे पूजा न जायते ।
तदा तु कार्त्तिकाष्टम्यां कर्म चैतत् प्रकीर्त्तितम् ॥
कृष्णाष्टमीं समारभ्य यावच्छुक्लाष्टमी भवेत् ।
दिवसे दिवसे पूर्वप्रोक्तं कर्म प्रशस्यते ॥
आश्विने कार्त्तिके वाऽपि कृष्णाष्टम्यां समाचरेत् ।
सर्वकामार्थसिद्ध्यर्थं कर्मेदं दुर्लभं स्मृतम् ॥ इत्यादि-(दुर्गाकल्पः)

वचनात् दुर्गार्च्चनं नित्यं काम्यं च संयोगपृथक्त्वन्यायेन ।

तत्र- दिनैः षोड़शभिर्नवभिरथपञ्चभिस्त्रिभिर्द्वाभ्याम् ।
एकेन च यद् विहितं क्रमशः प्रस्तौमि तद्विधानमहम् ॥

तत्र कृष्णाष्टम्यादि शुक्लाष्टम्यन्तं पूजनं षोडशदिनात्मकम् ।

---

१) दुर्गाशयने प्रदोषः कर्मकालः । उभयदिनप्रदोषस्पर्शे परेद्युः शुक्लाष्टमीत्वात् ।

२) एवं चेति देवीपुराणवचने "वर्षे वर्षे" इति वीप्सया प्रत्यवायेन च दुर्गापूजायाः नित्यता प्रतिपाद्यते ।

३) यदा दैवेति वचनेन अनुकल्पेन "दिवसे दिवसे" इति वीप्सया च दुर्गापूजायाः नित्यत्वं प्रतिपादितं, सर्वकामार्थसिद्ध्यर्थमिति काम्यत्वमपि । तेन संयोगपृथक्त्वन्यायेन दुर्गापूजाया नित्यकाम्योभयरूपत्वं सिद्धमेव ।

तत्र– सप्त[१]म्यामुदिते सूर्ये परतश्चाष्टमी यदि ।
तत्र दुर्गोत्सवं कुर्यान्न कुर्यादपरेऽहनि ॥
यदाऽष्टमीं तु सम्प्राप्य अस्तं याति दिवाकरः ।
तत्र दुर्गोत्सवं कुर्यान्न कुर्यादपरेऽहनि ॥ (विश्वरूपनिबन्धः)
"वृथा पशुघ्नतां याति नवमीवासरार्च्चिते ।
अष्टमीनिशि सन्तुष्टा पूजां गृह्णाति पार्वती ॥
अष्टमी नवमीविद्धा तत्र दुर्गां न पूजयेत् ।
पूजयन् क्लेशभागी स्यात् यथा वज्रहतो गिरि"रिति–(भगवतीपु.)
वचनात् [२]पूर्वविद्धाष्टमी ग्राह्या ।
आश्विने मासि शुक्ले तु कर्त्तव्यं नवरात्रकम् ।
[1]प्रतिपदाक्रमेणैव यावच्च नवमी भवेत् ॥ (भविष्योत्तरपु·)
शुक्ले–शुक्लपक्षे । [2]नवरात्रिसम्बन्धि पूजादिकं कर्म ।
नवरात्रं प्रयत्नेन प्रत्यहं सा समर्च्चिता ॥
नाशयत्येव विघ्नौघान् सुगतिं चैव दास्यति" इति फल[3]ञ्च ।
"पञ्चमी सप्तमी चैव दशमी च त्रयोदशी ।
प्रतिपन्नवमी चैव कर्त्तव्या सम्मुखी तिथिः ॥ (पैठीनसिः)
[३]सम्मुखी नाम सायाह्नव्यापिनी गृह्यते यदा ॥ इति (स्कन्दपु.)
पूर्वविद्धा ग्राह्या । उपरितनेषु [४]चतुर्ष्वपि पक्षेषु इयमेव व्यवस्था उन्नेया ।
अथवा नवरात्रं तु उपवासपरायणः ।
पूजयेद् विधिवद् दुर्गां बिल्वपत्रैर्नराधिप ॥

---

१) सप्तम्यामिति वचनेन दुर्गोत्सवस्य उदयवेधो वारितः । यदाष्टमीमिति वचनेन अस्तमयवेधश्च दर्शितः ।
२) अष्टम्याः पूर्वविद्धत्वं मूलाष्टमीविषयं कृष्णाष्टमीत्वात् ।
३) सम्मुखीवचनेन प्रतिपदादि-नवरात्रपक्षः पूर्वविद्धो ग्राह्यः ।
४) चतुर्षु पञ्चदिनत्रिदिनद्विदिनैकदिनपक्षेषु इयमेव व्यवस्था सायाह्नव्याप्त्या ग्राह्यातिथिर्निरूपणरूपा । इत्थमुक्त्वापि ग्रन्थकारः महाष्टमीविषये प्रदोषव्याप्तिं तिथिद्वैधे च परविद्धत्वं दर्शयिष्यति ।

---

पाठा. 1) प्रतिपदादि–ग, ङ, ज । प्रतिपदाद्यक्रमे–झ । प्रतिपत्तिथिमारभ्य–घ । 2) नवमी–घ । 3) फलम्– ङ ।

द्रोणपुष्पैस्तथा वीर जातीपुष्पैश्च पूजयेत् ।

अत्र नक्तमपि विहितमस्ति । [1]आश्विनमासे योऽयं नवरात्रोत्सवः प्रतिपदादिः क्रियते, तस्य नक्तव्रतत्वान्नक्त[2]कालेन व्यवस्थेति माधवाचार्याः । पञ्चदिनपक्षे पञ्चम्यादि तिथिषु पूजा । त्रिदिनपक्षे—

"[1]व्रती प्रपूजयेद् देवीं सप्तम्यादिदिनत्रये ।

द्वाभ्यां चतुरहोभिर्वा ह्रासवृद्धिवशात्तिथेः ।।" (भविष्यपु.)

"चेरुर्हविष्यं भुञ्जानाः कात्यायन्यर्च्चनं व्रतम् ।(भागवत १०-२२-१

इत्यादौ दुर्गापूजाया अपि व्रतत्वं व्यक्तम् ।

ऋक्षत्रयेऽपि मूलादौ नवम्यामाश्विने सिते ।

चण्डिकामुपहारैश्च पूजयेद् राष्ट्रसिद्धये ।। (रुद्रयामलभविष्यपु)

इति वचनात् राष्ट्रसिद्धिका[3]मस्तु [2]मूलादिनक्षत्रत्रये [4]पूजां कुर्यात् । तदापि काम्ये कृते नित्यमनुष्ठितं स्यादिति न्यायात् नित्यपूजासिद्धिः ।

"[3]अष्टम्याञ्च नवम्याञ्च जगन्मातरमम्बिकाम् ।

---

१) व्रतीप्रपूजयेदिति चेरुर्हविष्यमिति चाभ्यां भविष्यभागवतवचनाभ्यां दुर्गापूजाया व्रतत्वमुक्तम् । "यद्यपि भागवतवचने "हेमन्ते प्रथमे मासि नन्दव्रजकुमारिकाः, चेरुर्हविष्यं भुञ्जानाः कात्यायन्यर्चनं व्रत"मित्यत्र पूजान्तरं वर्णितं न तु शारदीयार्चनं तथापि अर्चनस्य व्रतरूपत्वप्रतिपादने नास्य वचनस्यासामर्थ्यम् ।

२) मूलादिपक्षस्तु काम्यः । प्रायेणास्य समाचारो न दृश्यते । कामी तत्र नृपतिः वचने राष्ट्रसिद्धेरुक्तत्वात् ।

३) आश्विनशुक्लपक्षमधिकृत्योक्तं ब्राह्मे—तत्राष्टम्यां भद्रकालीदक्षयज्ञविनाशिनी ।। प्रादुर्भूता महाघोरा योगिनीकोटिभिः सह
अतोर्थं पूजनीया सा तस्मिन्नहनि मानवैः । (कल्पतरु-नियत-४०७)

---

पाठा. 1) आश्वयुङ्मासे-घ । आश्वयुज- ख,ग,भ । "ननु आश्वयुजमासे योयं नवरात्रोत्सवः तदुपक्रमस्यापि पूर्वविद्धायां क्रियमाणत्वात् सोप्यत्र विवक्षणीय इतिचेन्न तस्य नक्तव्रतत्वा"दितिमुद्रितकालमाधवपाठः । 2)नक्तकाले ग ।3) कामेन तु–ग,भ । कामेन– घ । 4) पूजा कार्या– घ । ऋक्षत्रितये-पूजा कार्या–भ ।

पूजयित्वाऽऽश्विने मासि विशोको जायते नरः" ।। [1]इति
(स्कन्द–भविष्यपु.)

"मासि चाश्वयुजे वीर शुक्लपक्षे त्रिशूलिनीम् ।
नवम्यां पूजयेद् यस्तु तस्य पुण्यफलं शृणु ।।
अश्वमेधसहस्रस्य वाजपेयशतस्य च ।
तत्फलं लभते वीर देवीदेवगणैर्वृतः ।। " (देवीपु.)

"आश्विने मासि शुक्लायां नवम्यां निशि चण्डिकाम् ।
पूजनाच्छत्रुनाशः स्याद्राष्ट्रं जयति लीलया ।।
दुर्गां सम्पूज्य दुर्गाणि नवम्यां तरतीच्छया ।
संग्रामे व्यवहारे च सदा विजयमश्नुते ।। (भविष्यपु.)

"प्रावृट्काले विशेषेण आश्विने ह्यष्टमीषु च ।
महाशब्दो नवम्याञ्च लोके ख्यातिं गमिष्यती''ति (देवीपु.)

वचनात् महाष्टमीमहानवमीति ख्यातिरुप[2]पन्ना ।

"यः करोत्युपवासं तु नवम्यां विधिवन्नृप ।
स फलं प्राप्नुयात् सर्वं राजसूयाश्वमेधयोः ।।
अश्वयुक्शुक्लपक्षस्य नवम्याञ्च वरानने ।
उपवासपरो भूत्वा यस्त्वां पश्यति भक्तितः ।।
तस्य पापं क्षयं याति तमः सूर्योदये यथा ।। (स्कन्दपु.)

---

ଦୁର୍ଗୋତ୍ସବ

ଶରତ୍କାଳୀନ ଦୁର୍ଗୋତ୍ସବର ୭ ଗୋଟି ପକ୍ଷ ଯଥା— ଷୋଡ଼ଶଦିନ ପକ୍ଷ, ନବଦିନ ପକ୍ଷ, ପଞ୍ଚଦିନ ପକ୍ଷ, ତ୍ରିଦିନ ପକ୍ଷ, ଦ୍ୱିଦିନ ପକ୍ଷ ଓ ଏକଦିନ ପକ୍ଷ । ଷୋଡ଼ଶଦିନ ପକ୍ଷ ଆଶ୍ୱିନ କୃଷ୍ଣାଷ୍ଟମୀ ଠାରୁ ଶୁକ୍ଲାଷ୍ଟମୀ ପର୍ଯ୍ୟନ୍ତ । ନବଦିନ, ପଞ୍ଚଦିନ, ତ୍ରିଦିନ ଓ ଦ୍ୱିଦିନ ପକ୍ଷ ଯଥାକ୍ରମେ ଆଶ୍ୱିନ ଶୁକ୍ଲ ପ୍ରତିପଦା ଠାରୁ, ପଞ୍ଚମୀଠାରୁ, ସପ୍ତମୀଠାରୁ ଓ ଅଷ୍ଟମୀଠାରୁ ଆଶ୍ୱିନ ଶୁକ୍ଲ ନବମୀ ପର୍ଯ୍ୟନ୍ତ । ଏକଦିନ ପକ୍ଷ କେବଳ ଆଶ୍ୱିନ ଶୁକ୍ଲ ନବମୀ । ଏ ସମସ୍ତ ପକ୍ଷରେ ସାୟଂକାଳ(ନକ୍ତକାଳ) କର୍ମକାଳ । ଦ୍ୱିଦିନପକ୍ଷଭିନ୍ନ ଅନ୍ୟ ସମସ୍ତ ପକ୍ଷାରମ୍ଭତିଥି ପୂର୍ବବିଦ୍ଧ ଅଟେ ।

---

पाठा. 1) ''इति'' ग, घ, झ पाठः । 2) रुत्पन्ना– ग, घ, छ, ज, झ ।

मासि चाश्वयुजे शुक्ले नवमी या नराधिप ।
तस्यां यत् क्रियते वीर नरैः स्नानादिकं प्रभो ।।
तत्सर्वमक्षयं तेषां सर्वसिद्धिकरं तथा ।
महानवम्यां पूजेयं सर्वसिद्धिप्रदायिका ।।
सर्वेषु वत्सवर्णेषु तव भक्त्या प्रकीर्त्तिता ।
कृत्वाऽप्नोति यशो राज्यं पुत्रायुर्धनसम्पदः ।।"

"श्रावणी दुर्गनवमी तथादूर्वाष्टमी च या ।
पूर्वविद्धैव कर्त्तव्या शिवरात्रि र्बलेर्दिनम् ।(नारदः)इति वचनात् पूर्वविद्धैव ग्राह्या ।

## दुर्गाष्टमीव्रतम्

"नक्तकाले तु सम्प्राप्ते मण्डलं कारयेद् व्रती" । इति (देवीपु.) वचनाद् दुर्गाष्टमीव्रते प्रदोषः कर्मकालः । उभय[1]दिने कर्मकालव्याप्तौ शुक्लाष्टमीत्वात् परविद्धा ग्राह्या ।

## गोष्ठाष्टमी

कार्त्तिकशुक्लपक्षमधिकृत्य—

गोष्ठाष्टम्यां गवां पूजा गोग्रासो गोप्रदक्षिणम् ।
गवामनुगमः कार्यः सर्वान् कामानभीप्सता[2] ।।

सर्वपाप विशुद्धये इति चतुर्थपादः क्वचित् पठितः ।

## [3]प्रथमाष्टमी

मार्गशीर्षकृष्णाष्टमी प्रथमाष्टमीत्युच्यते । तत्र समाचारात् उत्कलदेशे प्रथमगर्भोत्पन्नस्यायुर्वृद्ध्यर्थं कलशे गणपत्यादिपञ्चदेवता-

---

१) "सर्वपापविशुद्धये" इति कूर्मपुराणे पठित इति गदाधरराजगुरुः ।

ଦୁର୍ଗାଷ୍ଟମୀ ବ୍ରତର ପ୍ରଦୋଷ କର୍ମକାଳ । ଉଭୟଦିନ ପ୍ରଦୋଷକୁ ଛିଥି ସ୍ପର୍ଶକଲେ ପରଦିନ ହେବ ।

କାର୍ତ୍ତିକ ଶୁକ୍ଳାଷ୍ଟମୀ ଗୋଷ୍ଠାଷ୍ଟମୀ । ଷୋଡ଼ଶ ମୁହୂର୍ତ୍ତ ତାହାର କର୍ମକାଳ । ତିଥି ଦ୍ୱୈଧ ହେଲେ ପରବିଦ୍ଧା ହେବ ।

---

पाठा. 1) उत्तरदिने- झ । 2) तः- ङ । 3) पंक्तिर्नास्ति- ख,घ,ङ,झ ।

पूजादिकं क्रियते । तत्र व्रतसामान्योक्तः कालः ।[1] तिथिद्वैधे युग्मवाक्यात् पूर्वदिने पूजादिकं [1]कार्यम्[2] ।

## भद्राष्टमी

[2]पौषे मासि यदा विप्र शुक्लाष्टम्यां बुधो भवेत् ।
तदा तस्मात् महापुण्या अहो [3]भद्रा प्रकीर्त्तिता ॥
तस्यां स्नानं तथा दानं तर्पणं विप्रभोजनम् ।
मत्प्रीतये कृतं देवी शतसाहस्रिकं भवेत् ॥ (शतानन्दसं.)

भीष्मा[3]ष्टमीव्यवस्था त्वस्मत्कृतश्राद्धदीपेऽनुसन्धेया ।

## नवमी

सा चाष्टमीयुता ग्राह्या युग्मात् ।

---

१) कृत्यकौमुद्यां "मध्याह्नादधिकमिति वचनं पठित्वा" न च तत्र मूलं पश्याम इत्युक्तम्" कालसारकारस्तु तद्वचनमुत्थाप्य तदसन्मूलमिति निबन्धनकृत इत्याह । कालदीपे यद्यपि 'क' पुस्तके पूजादिकं कार्यमित्यनन्तरं तद्वचनं लभ्यते तथापि ख,ग,घ,ङ,च,छ,ज,झ-पुस्तकेषु तन्नास्ति । ततो दीपकृता वचनमिदं नोद्धृतमित्यवगम्यते । श्रीलिङ्गराजदेवस्य यात्रायामुदयवेध एव ग्राह्यः ।

२) भद्राष्टम्यामुदयवेध एव ।

३) भीष्माष्टमी- माघशुक्लाष्टमी । एकोद्दिष्टकालस्तत्र ग्राह्यः भीष्माष्टम्यां भीष्मश्राद्धस्य मुख्यत्वात् तस्य चैकोद्दिष्टरूपत्वात् ।

ମାର୍ଗଶିର କୃଷ୍ଣାଷ୍ଟମୀ ପ୍ରଥମାଷ୍ଟମୀ ଯୋଦଯୁଷିମୂହୂର୍ତ୍ତ କର୍ମକାଳ । ତିଥି ଦ୍ୱୈଧହେଲେ ପୂର୍ବଦିନ ହେବ । (ଶ୍ରୀଲିଙ୍ଗରାଜ ଦେବଙ୍କ ଯାତ୍ରା ନିମନ୍ତେ ସୂର୍ଯ୍ୟୋଦୟ ବେଧ ଗ୍ରାହ୍ୟ ।)

ପୌଷଶୁକ୍ଳାଷ୍ଟମୀ ବୁଧବାରର ପଡ଼ିଲେ ଭଦ୍ରାଷ୍ଟମୀ ଯୋଗ ହୁଏ । ତହିଁରେ ଉଦୟବେଧ ଗ୍ରାହ୍ୟ ଅଟେ । ମାଘଶୁକ୍ଳାଷ୍ଟମୀ ଭୀଷ୍ମାଷ୍ଟମୀ । ତହିଁରେ ଏକୋଦ୍ଦିଷ୍ଟ କାଳବ୍ୟାପିନୀ ତିଥି ଗ୍ରାହ୍ୟା ଅଟେ ।

ସାମାନ୍ୟତଃ ନବମୀ ପୂର୍ବବିଦ୍ଧା ।

---

पाठा. 1) तद्व्यवस्थातिथि ख, ग । 2) मध्याह्नादधिकं किञ्चित् परतः प्रथमाष्टमी । तत्र 'पूजादिकं कार्यं न्यूना चेत् पूर्ववासरे" इति स्मृत्यन्तरे- क । 3) रात्रीतिकी ग । रात्रेतिकी- ङ ।

## रामनवमी

"[1]प्राप्ते श्रीरामनवमीदिने मर्त्यो विमूढधीः ।
उपोषणं न कुरुते कुम्भीपाकेषु पच्यते ॥
यस्तु रामनवम्याञ्च भुङ्क्ते मोहाद विमूढधीः ।
कुम्भीपाकेषु घोरेषु पच्यते नात्र संशयः ॥

[1]अत्र मर्त्यं इत्युपादानात् नरमात्राधिकारः ।

एवञ्च– कुर्यात् रामनवम्यां तु उपोषणमतन्द्रितः ।
मातुर्गर्भमवाप्नोति नैव रामोऽव[2]दत् स्वयम् ॥
[3]तस्मात् सर्वात्मना सर्वे कृत्वैव नवमीव्रतम् ।
मुच्यन्ते पातकैः सर्वैर्यान्ति ब्रह्म सनातनम् ॥

अतः संयोगपृथक्त्वन्यायान्नित्यं काम्यं च ।

चैत्रे मासि नवम्यां तु जातो रामः स्वयं हरिः ।
[4]पुनर्वस्वृक्षसंयुक्ता सा तिथिः सर्वकामदा ।
पुनर्वस्वृक्षसंयोगः स्वल्पोऽपि यदि लभ्यते ।
चैत्रशुक्लनवम्यां तु सा तिथिः सर्वकामदा ॥
श्रीरामनवमी प्रोक्ता कोटिसूर्यग्रहाधिका ।
तस्मिन् दिने महापुण्ये राममुद्दिश्य भक्तितः ।
यत् किञ्चित् कुरुते कर्म [5]तद् भवक्षयकारकम् ।
उपोषणं जागरणं पितॄनुद्दिश्य तर्पणम् ।
तस्मिन् दिने तु कर्त्तव्यं ब्रह्मप्राप्तिमभीप्सुभिः ।
[6]चैत्रशुक्लनवम्यां तु रामस्य पूजनं भवेत् ॥

---

१) अनेन प्रत्यवायप्रदर्शनमुखेन व्रतस्य नित्यत्वमुक्तम् । प्राप्ते श्रीरामे"–त्यारभ्य सर्वाणि रामनवमीप्रकरणोक्तानि वचनानि अगस्त्यसंहितायां इत्युक्तमाचार्यैः ।

---

पाठा. 1) अथ- क, ख, । तत्र-घ । 2) भवेत्-तथितस्त्वधृतपाठः-६१ । 3) तस्मात्सर्वप्रयत्नेनकृत्वैव नवमीव्रतम् । मुच्यते पातकैः सर्वैर्याति ब्रह्म सनातनम्–ख । 4) श्लोकार्द्धमिदं नास्ति- ख, भ । 5) भवत्यक्षय-कारकम्–ख । तद् भवत्यक्षयं पुनः- ग । 6) चैत्रे- ख ।

ततो मध्याह्नवेलायां संजातो हि जगत्पतिः ।
"चैत्रे शुद्धा[1] तु नवमी पुनर्वसुयुता यदि ॥

सैव मध्याह्नयोगेन महापुण्यतमा भवेत् ।
नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैः ॥
उपोषणं नवम्यां वै दशम्यामेव पारणम् ।"
श्रीरामजन्मनवमी सम्पूर्णा फलदा सदा ॥
विद्धा चेत् परविद्धैव कर्त्तव्या तु विशेषतः ।
द्वयोर्मध्याह्नयुक्ता चेन्नोपोष्या पूर्वसंयुता ॥
परविद्धैव कर्त्तव्या मध्याह्नव्यापिनी सदा[2] ॥ (अगस्त्यसंहिता)

शुद्धेति श्रवणाच्छुद्धायामृक्षादरो न विद्धायाम् । अतएवाष्टमीविद्धा नवमी सनक्षत्रापि नोपोष्या, सैव तादृश्यैव न तु विद्धा । दशमीपारण-[3]सत्त्वे—

"सर्वैरेवाष्टमीविद्धा नोपोष्या विष्णुपरायणैः ॥ इति तु विष्णुपरायणत्वेन भवितव्यमित्युपदेशपरं न तु कर्तृविशेषकम् ।

महानवमीव्यवस्था तु दुर्गोत्सवे कृता वेदितव्या ।

---

१) शुद्धा अत्र सूर्योदयव्यापिनी न तु सम्पूर्णा ।

२) रामनवम्यां परविद्धायामाचरिते व्रते यत्र पारणमेकादश्यामापतति तत्र एकादश्यां भोजनस्य निषिद्धत्वात् पूर्वविद्धायामुपवासो वैष्णवैरपि सुतरां विधेय एवेति सारः । इत्येतत् तिथितत्त्वकारमतं ग्रन्थकृता क्रोडीकृतम् । वस्तुतस्तु "परविद्धैवकर्त्तव्या मध्याह्नव्यापिनी सदा" इति प्रमाणवाक्ये— परविद्धत्वस्य मध्याह्नव्यापित्वस्य च द्वयोरेव विधेयत्वेनोपदिष्टत्वात् दिनद्वये मध्याह्नयोगाभावे परेद्युरेव ।

ରାମନବମୀ

ଚୈତ୍ର ଶୁକ୍ଳନବମୀ ରାମନବମୀ । କର୍ମକାଳ ମଧ୍ୟାହ୍ନ । ଅଷ୍ଟମୀବିଦ୍ଧ ନବମୀରେ ଉପବାସ ନିଷିଦ୍ଧ । ଯେଉଁବର୍ଷ ନବମୀ ତିଥି କ୍ଷୟ ହେବ ସେ ବର୍ଷ ଅଗତ୍ୟା ଅଷ୍ଟମୀବିଦ୍ଧ ନବମୀରେ ଉପବାସ କରାଯିବ । ଦୁଇଦିନ ମଧ୍ୟାହ୍ନକୁ ନଥିଲେ ପରଦିନ ହେବ ।

ବାସନ୍ତିକ ଦୁର୍ଗୋତ୍ସବ ନିମନ୍ତେ ଶାରଦୀୟ ଦୁର୍ଗୋତ୍ସବ ବ୍ୟବସ୍ଥା ଗ୍ରାହ୍ୟ ଅଟେ ।

---

पाठाः 1) शुक्ला- क, झ । 2) यदा- ग, ङ, झ । 3) सत्त्वेन-ग ।

## दशमी

[३]कृष्णपक्षे तिथि ग्राह्या यस्यामस्तमितो रविः ।

शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः । इति (मार्कण्डेयपु)

वचनात् कृष्णदशमी पूर्वविद्धा, शुक्लदशमी परविद्धा ग्राह्या । अतएव माधवाचार्याः—

"कृष्णा पूर्वोत्तरा शुक्ला दशम्येवं व्यवस्थिता ।"

## दशहरा दशमी

'[४]ज्येष्ठस्य शुक्लदशमी संवत्सरमुखी स्मृता ।

तस्यां स्नानं प्रकुर्वीत दानं चैव विशेषतः ॥

यां काञ्चित् सरितं प्राप्य दद्याद् दर्भैस्तिलोदकम् ।

मुच्यते दशभिः पापैः सुमहापातकोपमैः ॥ (स्कन्दपु.)

अत्र केवलदशम्यां नदीमात्रे दर्भकरणकतिलतर्पणाङ्गस्नानाद्दशविधपापक्षयः । एवं दानादिष्वपि ।

"[१]ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता ।

हरते दशपापानि तस्माद् दशहरा स्मृता ॥" (ब्रह्म ६३-११)

"ज्येष्ठे शुक्लदशम्यां तु[1] भवेद् भौमदिनं यदि ।

ज्ञेया हस्तर्क्षसंयुक्ता सर्वपापहरा तिथिः ॥ (भविष्यपु.)

केवलदशमी पुण्या । हस्तानक्षत्रसंयुक्ता पुण्यतरा । भौमवारे हस्तर्क्षसंयुक्ता पुण्यतमा । दशपापानि यथा (मनुः)—

अदत्तानामुपादानं हिंसा चैवाविधानतः ।

परदारोपसेवा च कायिकं[2] त्रिविधं स्मृतम् ॥ (१२-७)

पारुष्यमनृतं चैव[3] पैशुन्यं चापि सर्वशः ।

---

१) ब्रह्मपुराणे तु प्रथमार्द्धस्य "शुक्लपक्षस्य दशमी ज्येष्ठे मासि द्विजोत्तमाः" इति पाठो दृश्यते (२३-१५) ।

ଦଶମୀ ଶୁକ୍ଳପକ୍ଷରେ ପରବିଦ୍ଧ ଓ କୃଷ୍ଣପକ୍ଷରେ ପୂର୍ବବିଦ୍ଧ ହେବ ।

---

पाठा. 1) च- ग, घ, ङ, भ । 2) शारीरं (मुद्रितमनुपाठः) । 3) चापि- ग, घ, ङ, भ ।

[1]असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥ (१२-६)

परद्रव्येष्वभि[2]ध्यानं मनसाऽनिष्टचिन्तनम् ।

वितथाभिनिवेशश्च त्रिविधं कर्म मानसम् ॥(१२-५)

"ज्येष्ठे मासि क्षितिसुतदिने शुक्लपक्षे दशम्यां,

हस्ते शैलान्निरगमदियं जाह्नवी मर्त्यलोकम् ।

पापान्यस्यां हरति च तिथौ सा दशेत्याहुरार्य्याः,

पुण्यं दद्यादपि शतगुणं वाजिमेधायुतस्य ॥ (शङ्खः)

भौमहस्तयुक्तज्येष्ठशुक्लदशम्यां गङ्गास्नानाद्दशविधपापक्षयः । शतगुण वाजिमेधायुतजन्य[1]पुण्यसमपुण्यं च फलम् । अत्र तिथिद्वैधे परविद्धा ग्राह्या । दशहराधिकारे—

[3]यस्तस्यां हलिनं कृष्णं पश्येद् भद्रां सुसंयतः ।

सर्वपापविनिर्मुक्तो विष्णुलोकं व्रजेन्नरः ॥ (ब्रह्मपु. ६३-१६)

## आश्विनशुक्लदशमी

एकादशीयुतायांच दशम्यामुत्सवादिकम् ।

शुक्लायामाश्विने मासि कुरुत्वं भरतर्षभ ॥

सूर्योदये [2]महाराज ! दृश्यते दशमी तिथिः ।

आश्विने मासि शुक्ला तु विजयां तां विदुर्बुधाः ॥

मार्त्तण्डस्योदये पुण्या वर्त्तते दशमी तिथिः ।

आश्विनशुक्लपक्षे तु सा भवेद् जयदा नृणाम् ॥

---

१) असंवद्धप्रलापः—सत्यस्यापि राजदेशपौरवार्त्तादेः निष्प्रयोजनं वर्णनमिति कुल्लूकः ।

२) अभिध्यानं— केनोपायेन अस्य धनं हरामीति चिन्तनम् ।

३) हलिनं— बलभद्रम् । कृष्णं-जगन्नाथम् । सुसंयतः-हविष्यब्रह्मचर्यादियुतः ।

ଜ୍ୟେଷ୍ଠ ଶୁକ୍ଳ ଦଶମୀ ଦଶହରା ଦଶମୀ । ଏଥିରେ ଗଙ୍ଗାସ୍ନାନକଲେ ଦଶବିଧ (କାୟିକ ବାଚିକ ମାନସିକ) ପାପକ୍ଷୟ ହୁଏ । ଏଥିରେ ହବିଷ୍ୟ ବ୍ରହ୍ମଚର୍ଯ୍ୟପୂର୍ବକ ଜଗନ୍ନାଥ ବଳଭଦ୍ର ଓ ସୁଭଦ୍ରାଙ୍କ ଦର୍ଶନକଲେ ବିଷ୍ଣୁଲୋକ ପ୍ରାପ୍ତ ହୁଏ । ତିଥି ଦ୍ୱୈଧହେଲେ ପରବିଦ୍ଧା ହେବ ।

---

पाठा. 1) जन्म- क । 2) यदा राजन्- ग, ङ, झ ।

"इषस्य दशमीं शुक्ला पूर्वविद्धां परित्यजेत् ।
श्रवणेनापि संयुक्ता"मित्यादिवचनात् परविद्धायामेवोत्स[1]वादिकं कार्यम् ।

"[1]श्रवणेन युता चेत् स्याद् दशमी चापराजिता ।
तत्र नीराजनं कृत्वा यात्रा कार्या जिगीषुणा ॥" (शतानन्दः)
दुर्गोत्सवानन्तरवैष्णवर्क्षे तिथौ दशम्यामपराजितायाम् ।
रामो जिगीषुर्दशदिक्षु वेधं कृत्वा जगाम रिपुरं प्रवीरः ॥
दशमीं यः समुल्लङ्घ्य प्रस्थानं कुरुते नृपः ।
तस्य संवत्सरं राज्ये न क्वापि विजयो भवेत् ॥

अशक्तौ खड्गादियात्रा कार्या ।

कार्यवशात् स्वयम[2]गमे [3]भूभर्तुः केचिदाचार्याः ।
छत्रायुधार्यमिष्टं वैजयिकं निर्गमे [4]कुर्याद् ॥
आश्विने दशमी [5]शुक्ला श्रवणेन समन्विता ।
विजयादशमी प्रोक्ता सा चैवात्यन्तदुर्लभा ॥
आश्विनस्य सिते पक्षे दशम्यां तारकोदये ।
स कालो विजयो ज्ञेयः सर्वकार्यार्थसिद्धये ॥
ईषत्सन्ध्यामतिक्रान्तः किञ्चिदुद्भिन्नतारकः ।
विजयो नाम कालोऽयं सर्वकार्यार्थसाधकः ॥
आश्विनस्य सिते पक्षे दशम्यां सर्वराशिषु ।
सायं काले शुभा यात्रा दिवा वा विजयक्षणे ।

एकादशो मुहूर्त्तो विजयः[6] ।

[1]सायं काले यदा न स्याद्दशमी चापरेऽहनि ।
नवमीसंयुता कार्या सर्वदा जयकाङ्क्षिभिः ॥

---

१) विजययात्रायां सायंसन्ध्याकालो मुख्यः तदभावे विजयनामा एकादश-मुहूर्त्तः । मुहूर्त्तनामानि यथा— कालमाधव कालसारयोः—

---

पाठा. 1) वोपवासादिकं- क, भ । 2) मक्षमे-क । 3) च भूमिभर्त्तुः केचिदाचार्याः-क । भूमिभर्त्तुः केचिदाहुराचार्याः-च । भूभर्तुः केचिदाहुराचार्याः- ख । 4) कुर्य्युः-क । 5) शुक्ले-ख,ग, भ । 6) विजयः, चतुर्दशश्च स्मृत्युक्तत्वात्- ख ।

नवमीशेषसंयुक्तदशम्यां विजयोत्सवं ।
कुरु राम त्वमित्युक्तं वसिष्ठेन महात्मना ॥

इत्यादिवचनात् नवमी संयुक्तायां दशम्यामेव प्रस्थानं कार्यम् ।

शमीमभ्यर्च्चयेद्देव[1] यात्रा निर्विघ्नसिद्धये ।
वारशूलादि हित्वा तु दिक्षु प्रस्थानमाचरेत् ॥

---

"रौद्रश्चैत्रश्च मैत्रश्च तथा शालटकः स्मृतः ।
सावित्रश्च जयन्तश्च गान्धर्वः कुतपस्तथा ॥
रौहिणश्च विरिञ्चश्च विजयो नैऋतस्तथा ।
माहेन्द्रो वारुणश्चैव भेदाः पञ्चदश स्मृताः । इति ।

दिनद्वये एकादशमुहूर्त्तयोगे सायकालयोगे वा पूर्वेद्युः यात्रा परेद्युरुपवासादिकमिति ग्रन्थकर्त्तुराशयः । चतुर्दशमुहूर्त्तश्च विजय इति पाठान्तरा चतुर्दशमुहूर्त्तश्चोपलभ्यते । तदुक्तं वीरमित्रोदयेसमयप्रकाशे (पृ २३२)

"रौद्रः श्वेतश्च मैत्रश्च तथा सारभटः स्मृतः ।
सावित्रो वैश्वदेवश्च गान्धर्वः कुतस्तथा ।
रौहिणस्तिलकश्चैव विभवो निकृतिस्तथा ।
शम्बरो विजयश्चैव भेदाः पञ्चदश स्मृता" इति ।

यद्यप्येषु वाक्येषु पञ्चदश सख्या नोपलभ्यते तथापि कृत्यकौमुदीपाठानुसारं भगः पञ्चदशत्वेन गणनीयः । तथा हि तत्र श्राद्धप्रकरणे मात्स्ये—

रौद्रः श्वेतश्च मैत्रश्च तथा सारभटः स्मृतः ।
सावित्रो विजयश्चैव गान्धर्वः कुतपस्तथा ॥
रौहिणश्च विरिञ्चश्च जयोथनिकृतिस्तथा ।
माहेन्द्रो वारुणश्चैव भगःपञ्चदशःस्मृतः ॥ इति

ଆଶ୍ୱିନ ଶୁକ୍ଳଦଶମୀ ବିଜୟାଦଶମୀ । ବିଜୟଯାତ୍ରାର ସାୟଂସନ୍ଧ୍ୟା ମୁଖ୍ୟକାଳ ଓ ଦିବସର ଏକାଦଶ ମୁହୂର୍ତ୍ତ ଗୌଣକାଳ । ଦୁଇଦିନ ବିଜୟ-କାଳକୁ ଥିଲେ କିମ୍ବା ଦୁଇଦିନ ସାୟଂ ସନ୍ଧ୍ୟାକୁ ଥିଲେ ପୂର୍ବଦିନ ବିଜୟଯାତ୍ରା ଓ ପରଦିନ ଉପବାସାଦି ହେବ ।

---

पाठा. देश- ख, भ । देवं- घ । दशमीमभ्यर्चयेद्देश- ङ ।

## एकादशी

एकादश्युपवासो नित्यः । "उपोष्यैकादशी नित्य"मिति (गरुडपु)। "एकादशी सदोपोष्ये"ति । (सनत्कुमारसंहिता)

तथा[1]– एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
वनस्थयतिधर्मोऽयं शुक्लामेव सदा गृही ।।(बृ.नारदीयपु २१-४)

[2]तथा– शयनी बोधिनीमध्ये या कृष्णैकादशी भवेत् ।
सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन ।। (ब्रह्मवै.पु.)

अत्र कृष्णानिषेधः व्रतविषयः ।

यानि कानि च पापानि ब्रह्महत्यादिकान्य[3]पि ।
अन्नमाश्रित्य तिष्ठन्ति सम्प्राप्ते हरिवासरे ।। (बृ नारदीयपु.२१-
न भोक्तव्यं न भोक्तव्य सम्प्राप्ते हरिवासरे । (कूर्म-स्कन्दपु.)
"निष्कृतिर्मद्यपस्योक्ता धर्मशास्त्रे मनीषिभिः ।।
एकादश्यन्नकामस्य निष्कृतिः क्वापि नोदिता ।
मद्यपानान्मुनिश्रेष्ठ पातैव नरकं व्रजेत् ।।
एकादश्यन्नकामस्तु पितृभिः सह मज्जति । (सनत्कुमारसंहिता)

इति भोज[1]नस्य निषिद्धत्वात् कृष्णायामपि भोजन[4] न कार्यम् ।

एकादशीषु कृष्णासु रविसंक्रमणे तथा ।
चन्द्रसूर्योपरागे च न कुर्यात् पुत्रवान् गृही ।। (कात्यायनः)

संक्रान्त्यादिविषये जैमिनिः—तन्निमित्तापवासस्य निषेधोऽयमुदाहृतः ।
नानुषङ्गकृतो ग्राह्यो यतो नित्यमुपोषणम् ।

---

१) एकादश्यां भोजननिषेधः सर्वान् प्रति अविशेषः । व्रताङ्गनियमपालने तु गृहस्थं प्रति कृष्णानिषेधः इति निष्कर्षः । कृष्णा अपि शयनीबोधिनी-मध्यगा उपोष्या तदुक्तम् –

शयनीबोधिनीमध्ये या कृष्णैकादशी भवेत् ।
सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचनेति ।।

---

पाठा. 1) ग, तथा च- भ । 2) ङ, भ पाठः । 3) नि च- ग, घ, ङ, भ ।
4) भोजनम् इति नास्ति- ग, घ, ङ, भ ।

तेन शुक्लैकादश्यां संक्रान्तिरविवासरादौ नैका[१]दशीनिषेधः । (किन्तु[1] संक्रान्तिनिमित्तकोपवासस्य गृहस्थं प्रति निषेधः । )

"उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् ।
उपवासं च[2] कुर्वीत आघ्राय पितृसेवितम् ॥ (कात्यायनः)
"सूतकेऽपि नरः स्नात्वा प्रणम्य मनसा हरिम् ।
एकादश्यां न भुञ्जीत व्रतमेतन्न लुप्यते ॥
मृतकेऽपि न भुञ्जीत ।"(वराहपु.)
"नारी दृष्टे रजस्यपि" पौलस्यः) ।

अशक्तस्य- [२]"एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन दानेन न निर्द्वादशिको भवेत् ॥
मच्छयने मदुत्थाने मत्पार्श्वपरिवर्त्तने ।
फलमूल-"जलाहारी[3] हृदि शल्यं समर्पयेत् ॥" (मार्कण्डेयः)

प्रकारान्तमाह—

"असामर्थ्ये शरीरस्य व्रते च समुपस्थिते ।
कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितम् ॥
भ्रातरं पितरं शिष्यं ब्राह्मणं दक्षिणादिभिः ।" (विष्णुरहस्यम्)

अन्यार्थमुपवासे कृते कर्त्तुरपि फलमाह—

"कर्त्ता दशगुणं पुण्यं प्राप्नुयान्नात्र संशयः" (कात्यायनः)

---

१) एकादशीसंक्रान्त्योः सन्निपाते एकादश्युपासः मया क्रियते इति गृहस्थेन ध्येयं न तु संक्रान्त्युपवासः क्रियते इति चिन्तनीयमिति भावः ।

२) एकभक्तेनेति मार्कण्डेयवचनम् । एकभक्तं तत् यत्र नियमपूर्वकं मध्याह्नस्य उत्तरभागे भुज्यते । नक्तं तत्, यत्र नियमेन नक्तकाले उक्तरूपे भुज्यते । अयाचितं–याचितान्नत्यागः । दानं चात्र उपवासप्रतिनिधिरूपं द्विगुणान्नभोज्यद्रव्यदानम् । निर्द्वादशीकः द्वादशीपारणाशून्यः एकादशीव्रतरहित इत्यर्थः ।

---

पाठा. 1) () नास्ति-ख । 2) प्र– ग, घ, भ । 3) -हारो रौरवं नरकं व्रजेत् । समार्पयेत्–घ ।

तत्र चैकादश्यां द्वैधे निर्णयः—

यत्रोदये कला काष्ठा मुहूर्त्तमपि दृश्यते ।
सैवैकादश्युपोष्या स्यान्न तु पूर्वा कथञ्चन ॥

दिन [1]द्वयेऽप्युदयसम्बन्धे द्वादशीवृद्धौ सर्वेषामुत्तरैव ।

## द्वादशीक्षये

[2]सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
द्वादशी च त्रयोदश्यां नास्ति चेत् तत् कथं भवेत् ॥
उत्तरां तु यतिः कुर्यात् पूर्वामुपवसेद् गृही (गरुड़पु.) ।

इति व्यवस्था । "निस्कामस्तूत्तरां वसेदितिवाक्यान्तरात् विधवाया अपि द्वितीयायामुपवासः ।

यदा तूदये दशमी, क्षीणा चैकादशी, परदिने द्वादशी तदा दशमीविद्धायामपि एकादश्यामेवोपवासः, एकादश्युपवासस्य नित्यत्वात् दशमीविद्धव्यतिरिक्तायाश्चाभावात्, दशमीविद्ध निषिद्धवाक्यानां परदिने एकादशीस[1]त्तापरत्वात् । उक्तं च[2]

विष्णुधर्मे- एकादशी दशाविद्धा सकला द्वादशी परे ।
उपोष्या दशमीविद्धा ऋषिरुद्दालकोऽब्रवीत् । इति ।
एवञ्च- कलार्द्धेनापि विद्धा स्याद् दशम्यैकादशी यदि ।
तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ।। इति ।

तत् काम्यद्वादशीव्रतनिमित्तं[3] न दशमीविद्धानिषेधपरम्[4] । काम्यं चास्ति

---

१) एकादश्यां दिनद्वये उदयव्यापिन्यां द्वादश्यां च तत्परेद्युर्वर्धमानायां, यथा एकादशी द ६०, परेद्युः एकादशी द ४ तत्परेद्युः द्वादशी द ६ यदि वर्त्तते तर्हि द्वितीयदिने यतिभिः गृहिभिश्चोपवासः कार्यः ।

२) सम्पूर्णैकादशीतिगारुडवचनेन मलैकादशीदिने यदि द्वादशी क्षयं गच्छति तदा उत्तरां-मलैकादशीं यतिः, पूर्वां सम्पूर्णामेकादशीं गृही कुर्यात् । विधवापि यतिवत् कुर्यात् ।

---

पाठा. 1) सद्भाव- ग, घ, ङ, झ । 2) उक्तं- क,ख,ङ । 3) त्ते- ख,ग,झ । त्तेन-ङ । 4) न त्वेकादशीव्रतनिषेधपरम् ख,ङ,झ अधिकपाठः ।

द्वादशीव्रतम् ।

"द्वादश्यामुपवासं तु ये वै कुर्वन्ति मानवाः ।
वत्स मामेव ते यान्ति मम व्रतपरायणाः ॥"

अन्यथादशमीविद्धोपवासविधायकवाक्यानामनव[1]काशप्रसङ्गात् ।

"एकादशी दशाविद्धा परतोऽपि न विद्यते ।
गृहिभिर्यतिभिश्चैव सैवोपोष्या सदा तिथिः ॥" (वायुपु.)

"एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
त्र्यहस्पृक् तदहोरात्रं नोपोष्यं तत् सुतार्थिभिः ॥" (पद्मपु.) इति

यद्यपि गृहस्थस्य निषिद्धं तथापि—

"[2]दशमीशेषसंयुक्ता गान्धार्या समुपोषिता ।"
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत् ॥ इति (नारदः)

दशमीविद्धानिषेधात् एकादशीक्षयवदिह विशेषदशमीविद्धपरवचनाभावात्

उप[3]वासनिषेधे तु भक्ष्यं किञ्चित् प्रकल्पयेत् । (वायुपु.)

इत्यस्या[1]शक्तविषयत्वे मानाभावात् ।

---

१) सावकाशनिरवकाशयो र्निरवकाशस्य बलवत्त्वमिति न्यायः । एकादशीक्षयव्यतिरिक्तस्थलेषु दशमीविद्धानिषेधवाक्यानि अवकाशं लभन्ते । एकादशीक्षयस्थले उक्तं दशमीविद्धवचनं तद्भिन्ने कापि अवकाशं न लभते । अतएव तत् बलवत् । अतः एव तत्र एकादशीक्षये गृहिभिः यतिभिश्च उपवासः [illegible]व्य इति भावः ।

२) गारुडे तु "दशम्यैकादशीमिश्रेति पाठ (गारु. १-१२५-२) ।

३) अनेन वचनेन निषेधशब्दस्य साक्षात् श्रवणात् अशक्तविषयता वक्तुं न शक्यते इति भावः ।

---

पाठा. 1) त्यशक्तस्याविषयत्वे-ख ।

"एकादशी दशाविद्धा [1]द्वादशी च क्षयं गता ।
दानं चाप्येकभक्तं वा तदा कुर्यादयाचितमिति ([2]वाक्याच्च) ॥
एकादश्या उदयस्थितावपि द्वादशीक्षये गृहस्थस्योपवासनिषेधवाक्या[3]-द्दानव्रतादिरूपेण एकादशीव्रतविधिपरत्वमेव ।

**अथ वैष्णवैकादशी व्यवस्था** ([4]माधवाचार्योक्ता लिख्यते)

(माध[5]वाचार्यैः) कलाकाष्ठादिवेधोऽरुणोदये सूर्योदये च समानस्तत्रा-रुणोदये वेधो वैष्णवविषयः[6] ।

उदयात् प्राक् चतस्रस्तु नाडिका अरुणोदयः (स्कन्दनारदौ.)
"दशमीशेषसंयुक्तो यदि स्यादरुणोदयः ॥
नैवोपोष्यं वैष्णवेन तद्दिनैकादशी व्रतम् ॥" (गरुडपु )

वैखानसपञ्चरात्रादिवैष्णवागमोक्तदीक्षायुक्तो वैष्णवः । तदभावे स्कन्दपुराणाद्युक्तगुणसम्पन्नो [7]वैष्णवः यथा—

---

୮ ବର୍ଷ ଠାରୁ ୮୦ ବର୍ଷ ପର୍ଯ୍ୟନ୍ତ ପ୍ରତ୍ୟେକ ମନୁଷ୍ୟର ଏକାଦଶୀରେ ଅନ୍ନତ୍ୟାଗ କର୍ତ୍ତବ୍ୟ । ପୁତ୍ରବନ୍ତ ଗୃହୀମାନେ କେବଳ ଶୁକ୍ଳ ଏକାଦଶୀରେ ଓ ଶୟନ ଉତ୍ଥାନ ଏକାଦଶୀ ମଧ୍ୟଗତ କୃଷ୍ଣ ଏକାଦଶୀରେ ବ୍ରତ କରିବେ । ଅନ୍ୟ କୃଷ୍ଣ ଏକାଦଶୀରେ ବ୍ରତ କରିବେ ନାହିଁ କିନ୍ତୁ ଅନ୍ନ ତ୍ୟାଗ କରିବେ । ଯେଉଁଦିନ ସୂର୍ଯ୍ୟୋଦୟକୁ ଏକାଦଶୀ ଥିବ ସେହିଦିନହିଁ ଉପବାସ କର୍ତ୍ତବ୍ୟ । ଦୁଇଦିନ ସୂର୍ଯ୍ୟୋଦୟକୁ ଥିଲେ ପରଦିନ ଉପବାସ କରାଯିବ । ଯେଉଁଠି ପୂର୍ବ-ଦିନ ଏକାଦଶୀ ଦ ୭୦ ଓ ପରଦିନ କିଛି ଏକାଦଶୀ ଥାଇ ଦ୍ୱାଦଶୀ କ୍ଷୟ ହୋଇଥାଏ ସେଠାରେ ପୂର୍ବଦିନ ଗୃହୀ ଓ ପରଦିନ ସଂନ୍ୟାସୀ ଓ ବିଧବା ବ୍ରତ କରିବେ ।

ଏକାଦଶୀ କ୍ଷୟ ହୋଇଥିଲେ ସେଠି ଅଗତ୍ୟା ଦଶମୀବିଦ୍ଧା ଉପବାସ କରାଯାଏ । ଦ୍ୱାଦଶୀ କ୍ଷୟ ସ୍ଥଳରେ ପୁତ୍ରବନ୍ତ ଗୃହୀମାନେ କିଛି ଭକ୍ଷଣପୂର୍ବକ କିମ୍ବା ଦାନ ପ୍ରଭୃତି ଦ୍ୱାରା ବ୍ରତର ପ୍ରତିନିଧିତ୍ୱ ସମ୍ପାଦନ କରି ବ୍ରତ ପାଳନ କରିବେ ।

---

पाठा. 1) दशमी–ङ । 2) ख, झ पाठः । 3) वाक्यानां व्रतादि– ख, झ । 4) ग, ङ, झ पाठः । 5) नास्ति- झ । 6) वैष्णवविषय इत्यनन्तरं "अरुणोदयवेधोत्र वेधः सूर्योदये तथा । उक्तौ द्वौ दशमीवेधौ वैष्ण-वस्मार्त्तयोः क्रमात्" इति वचनात्- झ । 7) वा वैष्णवः– झ, ङ ।

"परमापदमापन्नो हर्षे वा समुपस्थिते ।
नैकादशीं त्यजेद्यस्तु तस्य दीक्षा तु वैष्णवी ।
समात्मा सर्वजीवेषु निजाचारादविप्लुतः ।
विष्ण्वर्पिताखिलाचारः स हि वैष्णव उच्यते" ॥ (स्कन्दपु.)

"[१]न चलति निजवर्णधर्मतो यः सममतिरात्मसुहृद्विपक्षपक्षे ।
न हरति न च हन्ति किञ्चिदुच्चैः सितमनसं तमवेहि विष्णुभक्तम्" ॥
(विष्णुपु ३-७-२०)

[२]एतादृशं प्रति, तिथिरेवं निर्णीयते—

एकादशी द्विविधा । अरुणोदयविद्धा, शुद्धा चेति । तत्र विद्धा त्याज्या । अरुणोदयवेधोऽपि यदा त्यज्यते तदा किमु वक्तव्यं सूर्योदयवेधे ।

"अर्द्धरात्रात् परा यत्र एकादश्युपलभ्यते ।
तत्रोपवासः कर्त्तव्यो न तु चैका[1]दशी कला" ॥ इति (स्मृतिः)

अर्द्धरात्रवेधोऽप्यस्तीति चेत् नैवम्, अर्द्धरात्रवेधोऽपि यदा वर्ज्यस्तदा किमु वक्तव्यमरुणोदयवेध इति[2] अर्द्धरात्रवेध उपन्यस्तो न तु वेधाभिप्रायेण । तदेतत् ब्रह्मवैवर्त्ते शौनकेन [3]स्फुटीकृतम्—

"अर्द्धरात्रेऽपि केषांचिद्दशम्यां वेध इष्यते ।
अरुणोदयवेलायां नावकाशो विचारणे ॥
कपालवेध इत्याहुराचार्या ये [३]हरिप्रियाः ।
न तन्मम मतं यस्मात् त्रियामा रात्रिरिष्यते" ॥ इति
"त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम् ।
नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते" ॥ इति. (ब्रह्मवै.पु.)

वचनात् त्रियामात्वं रात्रेः ।

---

१) सितमनसं- शुद्धाशयम् ।

२) एतादृशं–वैष्णवलक्षणोपेतं वैष्णवं प्रति तिथिः उपवासयोग्या एकादशी-तिथिः, एवं-वक्ष्यमाणरीत्या निर्णीयते ।

३) हरिप्रियाः– वैष्णवाः । यद्यपि कपालवेधो ब्रह्मवैवर्त्ते निषिद्धः तथापि रामानुजपरम्परया आद्रियते ।

---

पाठा. 1)वै दशमी-ख,ग,झ कालमाधवेपि । 2)इतिवक्तुं–ग,ङ । 3)स्पष्टी–ङ ।

अतएव दक्षेण प्रातः[1]कालमारभ्य उत्तरदिनाह्निककृत्यमभिहितम् ।

शुद्धैकादशी द्विविधा । आधिक्येन युता तद्रहिता च । आधिक्यं त्रिविधम् । एकादश्याधिक्यं, द्वादश्याधिक्यम्, उभयाधिक्यं चेति । त्रिष्वेतेषु अरुणोदयमारभ्य प्रवृत्तां शुद्धामप्येकादशीं परित्यज्य परेद्युरुपवासः कर्त्तव्यः ।

एकादश्याधिक्ये- "सम्पूर्णैकादशी यत्र द्वा[1]दश्यां वृद्धिगामिनी ।
द्वादश्यां लङ्घनं कार्यं त्रयोदश्यां तु पारणम् ॥
एकादशीकला प्राप्ता येन द्वादश्युपोषिता ।
तुल्या क्रतु शतेन स्यात् त्रयोदश्यां तु पारणम्" ॥

द्वादश्याधिक्ये—
एकादशी यदा [2]लुप्ता परत्र द्वादशी भवेत् ।
उपोष्या द्वादशी यत्र यदीच्छेत् परमां गतिम् ॥

उभयाधिक्ये- सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
तत्रोपोष्या द्वितीया तु परतो द्वादशी यदि ॥ (भृगुः)

उभयाधिक्यरहितायां तु शुद्धायां कोऽपि सन्देहो नास्ति[2] ।

इति वैष्णवानामेकादशी निर्णीता ।

---

१) "प्रातरुत्थाय कर्त्तव्य यद्द्विजेन दिने दिने । तत्सर्वं सम्प्रवक्ष्यामि द्विजानामुपकारकम् ॥ (दक्षः २-१) इत्युपक्रम्य उषःकाले तु संप्राप्ते शौचं कुर्याद् यथार्थवत् । ततः स्नान प्रकुर्वीत दन्तधावनपूर्वकम् ॥ (दक्षः२-६) इति लिलेख । अत्र प्रातःशब्दः प्रभातपरः ।

२) प्रसङ्गाद् वैष्णवानामन्या उपोष्या द्वादश्य उच्यन्ते -

ବୈଷ୍ଣବମାନେ ଯେଉଁଦିନ ଅରୁଣୋଦୟକୁ ଏକାଦଶୀ ଥିବ ସେହିଦିନକୁ ଏକାଦଶୀ ଧ୍ରୁବ କରିବେ । ଅରୁଣୋଦୟ ସୂର୍ଯ୍ୟୋଦୟର ୪ଦଣ୍ଡ ପୂର୍ବରୁ ହୁଏ । ଦୁଇ ଅରୁଣୋଦୟାଂଶକୁ ଛୁଇଁ ରହିଲେ ପରଦିନ ବ୍ରତ । (ରାମାନୁଜ ବୈଷ୍ଣବମାନେ ଅର୍ଦ୍ଧରାତ୍ରିବେଧ ଗ୍ରହଣ କରନ୍ତି) ।

---

पाठा. 1) द्वादशी= ख, ज, झ । 2) इष्टा-ख ।

अष्टवर्षाधिको मर्त्यो [1]ह्यपूर्णाशीतिवत्सरः ।
एकादश्यामुपवसेत् पक्षयोरुभयोरपि ॥ (कात्यायनः)

प्रतिनिधौ ( [2]कश्चिद् ) विशेषः स्मर्य्यते ।

काम्ये प्रतिधिर्नास्ति नित्ये नैमित्तिके च सः ।
काम्येऽप्युपक्रमादूर्ध्वं केचित् प्रतिनिधिं विदुः ॥ (त्रिकाण्डमण्डनः)

असामर्थ्ये उपक्रमादूर्ध्वं प्रतिनिधिनापि तत् कारयेत् ।

"सायमाद्यन्तयोरह्नोः सायं प्रातश्चमध्यमे ।
उपवासफलं प्रेप्सुर्जह्याद् भक्तचतुष्टयम् ॥" (अङ्गिराः)
"अथ नित्योपवासी चेत् सायं प्रातर्भुजिक्रियाम् ।
वर्जयेन्मतिमान् विप्रः सम्प्राप्ते हरिवासरे" ॥ (विष्णुरहस्यम्)
"उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् ।
उपवासं तदा कुर्यादाघ्राय पितृसेवितम्" ॥ (कात्यायनः)

---

यदि अमावास्या वा पूर्णिमा वा शुद्धाधिका भवति तदा तत्पक्षे एकादशीं परित्यज्य द्वादश्यामुपवासः कार्यः । सा पक्षवर्द्धिनीत्युच्यते । पुष्या श्रवणापुनर्वसुरोहिणीनां द्वादश्यां योगे द्वादश्यामुपवासः । क्रमेण ताः पापनाशिनी, विजया, जया, जयन्तीत्युच्यन्ते । पुष्यादीनां नक्षत्राणां द्वादश्याश्च सूर्योदयमारभ्य सूर्यास्तं यावत् स्थितिरत्रापेक्ष्यते । श्रवणा यास्तु सूर्योदये एव । प्रमाणं हरिभक्तिविलासादौ द्रष्टव्यम् ।

ଅମାବାସ୍ୟା ବା ପୂର୍ଣ୍ଣିମା ବୃଦ୍ଧି ପ୍ରାପ୍ତ ହୋଇ ପରଦିନକୁ ରହିଲେ ସେ ପକ୍ଷରେ ଦ୍ୱାଦଶୀରେ ଉପବାସ କରିବେ । ତାହା ପକ୍ଷବର୍ଦ୍ଧିନୀ ।

ଯଦି ଶୁକ୍ଳ ଦ୍ୱାଦଶୀରେ ସୂର୍ଯ୍ୟୋଦୟଠାରୁ ସୂର୍ଯ୍ୟାସ୍ତ ପର୍ଯ୍ୟନ୍ତ ପୁଷ୍ୟା ପୁନର୍ବସୁ କିମ୍ବା ରୋହିଣୀ ଓ ଦ୍ୱାଦଶୀ ଥାନ୍ତି ତେବେ ସେଥିରେ ଉପବାସ କର୍ତ୍ତବ୍ୟ । ଯଥାକ୍ରମେ ସେମାନଙ୍କ ନାମ ପାପନାଶିନୀ, ଜୟା ଓ ଜୟନ୍ତୀ । ଦ୍ୱାଦଶୀରେ ଉଦୟକୁ ମାତ୍ର ଶ୍ରବଣା ରହିଲେ ତହିଁରେ ଉପବାସ କରବ ତା' ନାମ ବିଜୟା ।

---

पाठा, 1) प्य-ख । 2) ख,ग,ङ,झ पाठः ।

"विधवा या भवेन्नारी भुञ्जीतैकादशी दिने ।
तस्यास्तु सुकृतं नश्येद् भ्रूणहत्या दिने दिने" ॥ (सौरधर्मे)
"[1]मूलं फलं पयस्तोयमुपभोग्यं भवेच्छुभम् ।
न त्वेवं भोजनं कैश्चिद् [1]एकादश्यां प्रकीर्त्तितम्" ॥(नारदीयम्)

एवमिति अनुकल्पातिरिक्तम् ।

"नक्तं हविष्यान्नमनोदनं वा फलं तिलाः क्षीरमथाम्बु चाज्यम् ।
यत् पञ्चगव्यं यदि वाथ वायुः प्रशस्तमत्रोत्तरमुत्तरं च" ॥ (वायुपु.)
"दन्तखाद्यं भवेद् यद्धि तदोदनमिति स्मृतम्" । (भविष्यपु.)

इति वचनात् तद्व्यतिरिक्तमनोदनम् । अनुकल्पेऽपि द्वादश्यां विष्णूपासनं पारणञ्च कर्त्तव्यम् ।

"[2]उपवासासमर्थश्चेदेकं विप्रं तु भोजयेत् ।
तावद्धनानि वा दद्याद् यद् भुक्ताद् द्विगुणं भवेत् ॥
सहस्रसम्मितां देवीं जपे[2]द्वा प्राणसंयमान् ।
कुर्याद् द्वादशसंख्याकान् यथाशक्ति व्रते [3]द्विजः" ॥ (ब्रह्मवै पु.)

देवीं-गायत्रीम् ।

---

१) एव मूलादियुभमुपभोग्यमनुकल्पत्वेनोपदिष्टम्, यतः कैश्चिदेकादश्यां भोजनं न प्रकीर्त्तितम् । अनुकल्पश्च "नक्तं हविष्यान्न'मित्यादिना उच्यते ।
२) मुद्रितब्रह्मवैवर्त्त॰ वचनान्ते "यथार्थं तद्व्रते नर" इति पाठः ॥

(୪-୧-୮୫)

ଏକାଦଶୀ ବ୍ରତ ଦଶମୀ ଓ ଦ୍ୱାଦଶୀରେ ଏକଭକ୍ତ କରିବେ । କେବଳ ଉପବାସୀ ଲୋକ ଏକାଦଶୀରେ କେବଳ ଭୋଜନ ତ୍ୟାଗ କରିବେ । ଏକାଦଶୀ ଦିନ ଶ୍ରାଦ୍ଧ ପଡ଼ିଲେ ଶ୍ରାଦ୍ଧଶେଷାନ୍ନକୁ କେବଳ ଅଘ୍ରାଣ କରିବ, ଭୋଜନ କରିବ ନାହିଁ ।

ଉପବାସରେ ଅସମର୍ଥ ବ୍ୟକ୍ତି ଜଣେ ବ୍ରାହ୍ମଣଙ୍କୁ ଭୋଜନ ଦେବ କିମ୍ବା ଭୋଜନର ଦୁଇଗୁଣ ଧନ ଦାନ କରିବ କିମ୍ବା ଏକହଜାର ଗାୟତ୍ରୀମନ୍ତ୍ର ଜପକରିବ କିମ୍ବା ୧୨ ଗୋଟି ପ୍ରାଣାୟାମ କରିବ ।

---

पाठा. 1) कंचित्- क । 2) जपेच्च- क । 3) नरः- ख, ग, ङ, झ ।

## द्वादशीपारणम्

"[१]पारणान्तं व्रतं ज्ञेय"मिति वचनात् पारणमावश्यकम् । तच्च द्वादशी-समये—

[२]महाहानिकरी ह्येषा द्वादशी लङ्घिता नृणामि"ति वचनात् ।
"द्वादश्याः प्रथमः पादो हरिवासरसंज्ञकः ।
तमतिक्रम्य कुर्वीत पारणं विष्णुतत्परः" ॥ (विष्णुधर्मोत्तरपु.)
"कलार्द्धां द्वादशीं दृष्ट्वा निशीथादूर्ध्वमेव हि ।
आमध्याह्नाः क्रियाः सर्वाः कर्त्तव्याः शम्भुशासनात् ॥ (स्कन्दपु.)

निशीथादूर्ध्वं सार्द्धप्रहरत्रयोपरि ।
यदा भवेदतीवाल्पा द्वादशी पारणादिने ।
उषः काले द्वयं कुर्यात् प्रातर्माध्याह्निकं तदा[1] ॥ (स्कन्दपु.)

अत्रासामर्थ्ये- संध्यादिकं भवेन्नित्यं पारणं तु निमित्ततः ।
अद्भिस्तु पारयित्वाथ नैत्यकान्ते भुजिक्रिया ॥ (कात्यायन)
"[३]सङ्कटे समनुप्राप्ते द्वादश्यां पारयेत् कथम् ।
अद्भिस्तु[2] पारयित्वाऽथ[3] नैत्यकान्ते भुजिर्भवेत् ॥(देवलः)

---

१) पारणान्तं व्रतं ज्ञेयं व्रतान्ते तद्धि भोजनम् ।
असमाप्ते व्रते पूर्वे नैव कुर्याद् व्रतान्तरम् ॥ इत्यादित्यपुराणवचनम् ।
२) करोतिधर्महरणमस्नातेव सरस्वती"त्यस्य नारदीयवचनस्य उत्तरार्द्धम् ।
३) जलपानस्य अशितानशितरूपत्वात् तेन सङ्कटसमाधानं भवति ।
"अशितानशिता यस्मादापो विद्वद्भिरीरिता" इति वचनात् ।

ପାରଣ ଦ୍ୱାରା ବ୍ରତ ପୂର୍ଣ୍ଣାଙ୍ଗ ହୁଏ । ପାରଣ ଦ୍ୱାଦଶୀରେ ହିଁ କରିବା ଆବଶ୍ୟକ କିନ୍ତୁ ଦ୍ୱାଦଶୀର ପ୍ରଥମପାଦରେ ନିଷିଦ୍ଧ । ଯଦି ଦ୍ୱାଦଶୀ ଅଳ୍ପ ଥାଏ ତେବେ ରାତିରୁ ନିତ୍ୟକର୍ମ ସାରି ଦ୍ୱାଦଶୀରେ ପାରଣ କରିବ । ତାହା ସମ୍ଭବ ନ ହେଲେ ଜଳଦ୍ୱାରା ଦ୍ୱାଦଶୀ ମଧ୍ୟରେ ପାରଣ କରି ନିତ୍ୟକର୍ମ କରିବ ଏବଂ ନିତ୍ୟକର୍ମ ସମାପ୍ତି ପରେ ଭୋଜନ କରିବ ।

---

पाठा. 1) भवेत्- ङ । 2) श्च-ग । 3) तु ग,ङ,झ ।

## शयनपरिवर्त्तनोत्थानकालाः

"शेते विष्णुः सदा[1]षाढे भाद्रे च परिवर्त्तते ।
कार्त्तिके प्रतिबुध्येत शुक्लपक्षे [2]हरेर्दिने" ॥ (मत्स्यपु)

हरेर्दिने- एकादश्याम् ।

"पञ्च मासान् हरौ सुप्ते देशे तत्र भयं भवेत् ।
ब्रह्महा स भवेद्राजा संग्रामे भयमाप्नुयात् ॥
स्वपेन्नारायणो देवश्चतुर्थे मासि सख्यया ।
न वर्द्धयेत् स्वापदिनं तदा-लोकः सुखी भवेत् ॥ (नरसिंहपु.)

अतः कार्त्तिकान्तमासचतुष्टये शयनं कार्यम् ।

"ततो विबुध्यते देवः श्रीमान् शङ्खगदाधरः ।
कार्त्तिके शुक्लपक्षस्य एकादश्यां तथा सुत ।
तथा समुत्थिते विष्णौ क्रियाः सर्वाः प्रवर्त्तयेत्" ॥

## माघशुक्लपक्षे भैम्येकादशी

"तथा पुण्यामिमां भीमतिथिं पापप्रणाशिनीम् ।
उपोष्य विधिनानेन गच्छेद् विष्णोः परं पदम्" ॥ (विष्णुधर्मे)

---

१) अत्र सदापदेन शयनस्य शुक्लपक्षहरिवासरसंयोगस्य च नित्यत्वम्, नतु आषाढस्य । भाद्रादौ मलमासपाते श्रावणशुक्लैकादश्यां शयनविधानात् कार्त्तिकान्तमासचतुष्टये शयनं कार्यमिति सिद्धान्ताच्च ।

२) हरेर्दिने इति एकादश्यां नतु द्वादश्याम् । तदुक्तं कल्पतरौ ब्रह्मपुराणे— (कल्प-व्रत- ३९१) एकादश्यां तु शुक्लायामाषाढे भगवान् हरिः । भुजङ्गशयने शेते यदा क्षीरार्णवे सदा इति पुनस्तत्रैव— एकादश्यां तु शुक्लायां कार्त्तिके मासि केशवम् । प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वित इति ।

ବିଷ୍ଣୁଙ୍କର ଆଷାଢ଼ ଶୁକ୍ଳ ଏକାଦଶୀରେ ଶୟନ, ଭାଦ୍ରଶୁକ୍ଳ ଏକାଦଶୀରେ ପାର୍ଶ୍ୱପରିବର୍ତ୍ତନ ଓ କାର୍ତ୍ତିକଶୁକ୍ଳ ଏକାଦଶୀରେ ନିଦ୍ରାଭଙ୍ଗ ହୁଏ । ଶୟନକାଳ ୪ ମାସରୁ ଅଧିକା ହେବନାହିଁ । ଏଣୁ ଏତନ୍ମଧ୍ୟରେ ମଳମାସ ପଡ଼ିଲେ ଶ୍ରାବଣ ଶୁକ୍ଳ ଏକାଦଶୀରେ ବିଷ୍ଣୁଙ୍କ ଶୟନ କରାଇବ । ହରିଶୟନ କାଳରେ ବିବାହାଦି ଶୁଭକର୍ମ ନିଷିଦ୍ଧ ଅଟେ ।

भीमतिथि- भीमतिथित्वेन ख्यातां माघशुक्लैकादशीम् ।

"[1]माघमासे शुक्लपक्षे पुष्यर्क्षेण युता पुरा ।
एकादशी तथा चैव भीमेन समुपोषिता ॥
अर्च्चयंस्तु व्रतं कृत्वा पितृणामनृणो भवेत् ।
[1]भीमैकादशी विख्याता प्राणिनां पुण्यवर्द्धिनी ॥
नक्षत्रेण विनाऽप्येषा ब्रह्महत्यां विनाशयेत्" । (गरुडपु.)

## द्वादशी

"[2]द्वादश्यामुपवासेन सिद्धार्थो नृप सर्वशः ।
चक्रवर्त्तित्वमतुलं संप्राप्नोत्यतुलां श्रियम्" ॥ (मार्कण्डेयः)

सा चैकादशीयुता ग्राह्या युग्मात् ।

"द्वादशी च प्रकर्त्तव्या एकादश्या युता विभो ।
सदा कार्या च विद्वद्भिर्विष्णुभक्तैश्च मानवैः ॥
द्वादशी श्रवणोपेता सर्वपापहरा तिथिः ।
बुधवारसमायुक्ता ततः शतगुणा भवेत् ॥
[3]तामुपोष्य समाप्नोति द्वादशद्वादशीफलम् ॥

---

१) गारुडे इति कृत्यकौमुद्याम् । गारुडे तु—
"माघमासे शुक्लपक्षे सूर्यर्क्षेण युता पुरा ।
एकादशी तथा चैका भीमेन समुपोषिता ॥
बाऽर्चय तु व्रतं कृत्वा पितृणामनृणोऽभवत् ।
भीमद्वादशी विख्याता प्राणिनां पुण्यवर्द्धिनी ॥
नक्षत्रेण विनाऽप्येषा ब्रह्महत्यादि नाशयेत्" । इति पाठः ।

२) "ब्रह्महत्यादि" इति कृत्यकौमुद्याम् ।

३) बुधश्रवणोपेता इयं द्वादशी विजयद्वादशीत्युच्यते । तदुक्तं कल्पतरौ ब्राह्मे—"विजयद्वादशीं प्राप्य पूजयेत्तु जनार्द्दनम् ।
मासि भाद्रपदे शुक्ला द्वादशी श्रवणे बुधः ॥
प्रशस्तः सोदयः कालः सिंहसंस्थो दिवाकरः ।
सिंहात्ततीयो द्रेक्काणः प्रावृण्ण्योश्च संगम" इति(नियत१९७)

ମାଘ ଶୁକ୍ଳ ଏକାଦଶୀ-ଭୈମୀ ଏକାଦଶୀ ୪୯୫ ।

---

पाठा. 1) भीम द्वादशी- ख, ग । भीमाद्या सात्र- भ । 2) द्वादशी- क, ख ।

## [1]श्रवणद्वादशी

शुक्ला वा यदि वा कृष्णा द्वादशी श्रवणान्विता ।
तयोरेवोपवासश्च त्रयोदश्यां तु पारणम् ।। (नारदकु.)
"द्वादश्यां तु भवेद् योगः श्रवणस्य दिवैव हि ।
[2]तदोपवासः कर्त्तव्यो वैष्णवैः सर्वदापि च ।।
उदयव्यापिनीं कुर्याच्छ्रवणद्वादशीं सदा ।
आचार्याः केचिदिच्छन्ति केचिन्नेच्छन्ति चापरे ।।
मुहूर्त्तत्रितयं वापि सङ्गवान्त्यमथापि वा" । (हरिभक्तिविलासः)
श्रवणद्वादशी चैव सङ्गवेऽत्वनुवर्त्तते[3] ।।
श्रवणद्वादशी सा स्यादुपोष्या विष्णुतत्परैः ।
"एकादशीमुपोष्यैतद् द्वादशीं समुपोषयेत् ।।
न चात्र व्रतलोपः स्यादुभयोर्देवता हरिः" । (विष्णुधर्मोत्तरम्)
असमाप्ते व्रते पूर्वं नैव कुर्याद् व्रतान्तरम् ।।
एकदैवतमुद्दिश्य कर्त्तव्यं नान्यथा क्वचित् ।।

उपवासद्वयासामर्थ्ये—

"एवमेकादशीं [4]भुक्त्वा[1] द्वादशीं समुपोषयेत् ।
पूर्वोपवासज पुण्यं सर्वं प्राप्नोत्यसंशयम्" । (विष्णुरहस्यम्)
"उपोष्य द्वादशीं पुण्यां विष्णु[2]ऋक्षेण संयुताम् ।।
एकादश्युद्भवं पुण्यं नरः प्राप्नोत्यसंशयम्" ।।

---

१) अत्र भुक्त्वा इति फलाद्याहारपरम् । "उपवासद्वयं कर्त्तुं न शक्नोति नरो यदि । प्रथमेह्नि फलाहारो निराहारोऽपरेऽहनि ।। इति भविष्यवचनादिति निर्णयसिन्धौ ।

२) विष्णुऋक्षं- श्रवणा ।

ଉପବାସରେ ଦ୍ୱାଦଶୀ ଏକାଦଶୀଯୁକ୍ତା ଗ୍ରାହ୍ୟା ଅଟେ । ଶୁକ୍ଳ ବା କୃଷ୍ଣ

---

पाठा. 1) पङ्क्तिर्नास्ति- ख, ग, ङ, झ । 2) तदोपवासः इत्यारभ्य तत्परैः इत्यन्तं श्लोकत्रयम् नास्ति- ङ । 3) संगवे द्वितीयप्रहरे "संगवे चारयन् गा इति माघे" इति ख पुस्तकेऽधिकपाठः । 4) त्यक्त्वा- ग ।

## चम्पकद्वादशी

ज्येष्ठे मासि सिते पक्षे द्वादश्यां चम्पकैः शुभैः ।
शुद्धैरभ्यच्चर्य गोविन्दं नरः किमनुशोचति ॥ (भविष्यपु)

## वामनजन्म

नभस्ये शुक्लपक्षे तु द्वादश्यां श्रवणोडुनि ।
बलेस्तु बन्धनं कर्त्तुं मध्याह्ने वामनस्त्वभूत् ॥
जयन्ती वामनाख्या सा सैवोपोष्या नरोत्तमैः ।
सर्वपापप्रशमनी सर्वकामप्रदायिनी ॥
एकादश्यां भवेद् योगो द्वाद[1]श्याः श्रवणस्य च ।
पूर्वाह्णे वाथ मध्याह्ने सा तिथिर्महती स्मृता ॥

## [2]विष्णुश्रृङ्खलयोगः

"[1]द्वादशी श्रवणर्क्षं च स्पृशेदेकादशीं यदि ।
स एव वैष्णवो योगो विष्णुश्रृङ्खल [3]संज्ञकः ॥

---

१) एकादश्याः द्वादश्याः श्रवणानक्षत्रस्य च देवता विष्णुः । एतस्य विष्णुदैवतत्रितयस्य श्रृङ्खलावत् परस्परसम्बद्धत्वेन स्थितया विष्णुश्रृङ्खलसंज्ञा उपपद्यते । अत्र श्रवणा एकादशीं द्वादशीं चोभयं स्पृष्ट्वा वर्त्तते । अत्र सूर्योदये श्रवणास्थितिर्नापेक्ष्यते किन्तु श्रवणद्वादश्यां द्वादशीश्रवणयोः सूर्योदयकालवर्त्तित्वमावश्यकमित्यनयोर्भेदः ।

ଦ୍ୱାଦଶୀରେ ଶ୍ରବଣା ନକ୍ଷତ୍ର ପଡ଼ିଲେ ତହିଁରେ ଉପବାସକରି ତ୍ରୟୋଦଶୀରେ ପାରଣ କରିବ । ଦ୍ୱାଦଶୀ ଓ ଶ୍ରବଣା ସୂର୍ଯ୍ୟୋଦୟକୁ ଥିଲେ ଶ୍ରବଣଦ୍ୱାଦଶୀ ହୁଏ । ଏକାଦଶୀ ଉପବାସ ପରେ ପାରଣ ନ କରି ଶ୍ରବଣ ଦ୍ୱାଦଶୀ ଉପବାସ କରିପାରିବାରେ । ଦୁଇଦିନ ଉପବାସ କରି ନ ପାରିଲେ (ଏକାଦଶୀରେ ଫଳାହାରକରି) ଶ୍ରବଣା ଦ୍ୱାଦଶୀରେ ଉପବାସ କରିବ ।

ଜ୍ୟେଷ୍ଠ ଶୁକ୍ଳ ଏକାଦଶୀ ଚମ୍ପକ ଦ୍ୱାଦଶୀ ଅଟେ ।

ବାମନଜୟନ୍ତୀ

ଭଦ୍ର ଶୁକ୍ଳ ଦ୍ୱାଦଶୀ ବାମନଜନ୍ମ ଦ୍ୱାଦଶୀ । ମଧ୍ୟାହ୍ନ ତାହାର କର୍ମକାଳ ।

---

पाठा. 1) द्वादश्यां- क । 2) ख,ग,ङ,भ पंक्ति र्नास्ति । 3) संज्ञितः–ख,ग,ङ ।

तस्मिन्नुपोष्य विधिवन्नरः प्रक्षीणकल्मषः ।
प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभाम्" ॥ (मत्स्यपु.)

### [1]शक्रोत्थापनम्

भाद्रे मासि सिते पक्षे श्रवणा द्वादशी यदा ।
शक्रमुत्थापयेत्तत्र श्रवणे तद्वियोगतः ॥ (ब्रह्माण्डपु.)
[1]एवं यः कुरुते यात्रामिन्द्रकेतोर्युधिष्ठिर ।
पर्जन्यः काम[2]वर्षी स्यात्तस्मिन् [3]राष्ट्रे न संशयः ।(भविष्योत्तरपु.)

### भीमद्वादशी

[2]मृगशीर्षे शशधरे माघे मासि [4]प्रजापते ।
एकादश्यां सिते पक्षे सोपवासो जितेन्द्रियः ॥
द्वादश्यां षट्तिलाचारं कृत्वा पापात् प्रमुच्यते ।
तिलस्नायी तिलोद्वर्त्ती तिलहोमी तिलोदकी ॥
तिलस्य दाता भोक्ता च षट्तिली नावसीदति ।
सकृत्तु षट्तिली भूत्वा सर्वपापैः प्रमुच्यते ।
त्रिंशद्वर्षसहस्राणि स्वर्गलोके [3]महीयते ॥ (विष्णुधर्मोत्तरे)

अत्र तैलग्रहणे दोषमाह

---

१) एवं य इति भविष्योत्तरवचनमिति कालसारे विष्णुधर्मोत्तरवचनमिति कृत्यकौमुद्याम् ।
२) मृगशीर्षे-मृगशिरोनक्षत्रे । शशधरे चन्द्रे ।
३) महीयते- पूज्यते ।

ବିଷ୍ଣୁଶୃଙ୍ଖଳ

ସୂର୍ଯ୍ୟୋଦୟକୁ ଏକାଦଶୀ ତା'ପରେ ଦ୍ୱାଦଶୀ ହେଲେ ଶ୍ରବଣା, ଏକାଦଶୀ ଓ ଦ୍ୱାଦଶୀ ଉଭୟକୁ ସ୍ପର୍ଶକଲେ ବିଷ୍ଣୁଶୃଙ୍ଖଳ ଯୋଗ ହୁଏ । (ଶ୍ରବଣ ଦ୍ୱାଦଶୀରେ ଦ୍ୱାଦଶୀ ଓ ଶ୍ରବଣ ନକ୍ଷତ୍ର ସୂର୍ଯ୍ୟୋଦୟକୁ ଥିବ କିନ୍ତୁ ବିଷ୍ଣୁଶୃଙ୍ଖଳରେ ଏକାଦଶୀ ସୂର୍ଯ୍ୟୋଦୟକୁ ଥାଏ) ।

ଭାଦ୍ର ଶୁକ୍ଳଦ୍ୱାଦଶୀରେ ଇନ୍ଦ୍ରଧ୍ୱଜପୂଜା ।

---

पाठा. 1) "शक्रोत्थापन"मिति- ग,ङ,झ । 2) कालवर्षी- ख,ग । 3) राज्ये ग । देशे- ख, ङ, झ । 4) प्रजापते- ग ।

उपोष्यैकादशीं माघे तैलाभ्यङ्गः कृतस्त्वया ।

द्वादश्यां[1] प्राग्भवे देव तेन व्याघ्रमुखो [2]भवान् ॥ (पद्मपु )

## त्रयोदशी

षष्ठ्यष्टम्यप्यमावास्या कृष्णा चैव त्रयोदशी ।

एताः परयुताः पूज्याः पराः पूर्वेण संयुताः ॥ (निगमः)

पराः— सप्तम्यादयः । "कृष्णा चैव त्रयोदशी"ति विशेषवचनात् ।

त्रयोदशी प्रकर्त्तव्या द्वादशी सहिता विभो । इति (ब्रह्मवैवर्त्तपु.) सामान्यवचनं शुक्लत्रयोदशीपरम् । सायंकालीनत्रिमुहूर्त्तव्यापित्वे पूर्वविद्धायां प्राप्तायां प्रातिपदिक इवास्याप्यपरा[3]ह्लः मुख्योऽपेक्षित इति द्रष्टव्यम् ।

त्रयोदशी प्रकर्त्तव्या या भवेदापराह्लिकी[4] । (स्कन्दपु.)

एकादशी तृतीया च षष्ठी चैव त्रयोदशी ।

पूर्वविद्धा तु कर्त्तव्या यदि न स्यात् परेऽहनि । (वसिष्ठः)

इति वचनात् ।

कृष्णपक्षे [5]यदि परविद्धा न लभ्यते, तदा पूर्वविद्धैव ग्राह्या ।

शुक्ला त्रयोदशी पूर्वा परा कृष्णत्रयोदशी ।

अलाभे साऽपि पूर्वैव पूर्वानङ्गत्रयोदशी ॥

"या शुक्ला गृह्यते पूर्वा गृह्यतां सापराह्लिकी"ति माधवाचार्याः ।

## अनङ्गत्रयोदशी

"मार्गशीर्षेऽमले पक्षे" इत्युपक्रम्य—

---

ମାଘ ଶୁକ୍ଳ ଦ୍ୱାଦଶୀ ଭୀମ ଦ୍ୱାଦଶୀ । ଏକାଦଶୀ ଦିନ ଉପବାସ କରି ଦ୍ୱାଦଶୀରେ ଷଡ଼୍‌ତିଳାଗ୍ନିର କଲେ ସର୍ବପାପମୁକ୍ତ ହେବ ।

ଶୁକ୍ଳ ତ୍ରୟୋଦଶୀ ପୂର୍ବବିଦ୍ଧା ଓ କୃଷ୍ଣ ତ୍ରୟୋଦଶୀ ପରବିଦ୍ଧା । ଅଭାବ ସ୍ଥଳେ କୃଷ୍ଣ ତ୍ରୟୋଦଶୀ ମଧ୍ୟ ପୂର୍ବବିଦ୍ଧା ହୁଏ ।

---

पाठा. 1) द्वादशी प्राप्य वै- क । 2) भव- ज । 3) -राह्लसम्बन्धोऽपेक्षि- ख, ग, ज, झ । 4) -ह्लिकी । इति माधवाचार्याः" । अनन्तरं एकादशीत्यादि वचनं नास्ति- ग । 5) यदा- ख, ङ, ज, झ ।

अनङ्गेन कृता ह्येषा तेनानङ्गत्रयोदशी"ति (भविष्ये)
कालमाधवीय उपसंहृतम् ।

कृष्णाष्टमी बृहत्तुल्या सावित्री वटपैतृकी ।
अनङ्गत्रयोदशी रम्भा उपोष्याः पूर्वसंयुताः ॥ (संवर्त्तः)

तिथितत्त्वे तु- "चैत्रशुक्लत्रयोदश्यां मदनं दमनात्मकम् ।
कृत्वा सम्पूज्य विधिवद् वीजयेद् व्यजनेन च ॥
ततः [1]संधुक्षितः कामः पुत्रपौत्रसमृद्धिदः ।
"[1]कामदेवस्त्रयोदस्यां पूजनीयो यथाविधि ॥
रतिप्रीतिसमायुक्तो ह्यशोकमणिभूषितः" । (भविष्यपु.)
ततः प्रातः समुत्थाय स्नात्वा [2]कलशवारिणा ॥
परं सौभाग्यमाप्नोति कामांश्चाप्नोति पुष्कलान् । (शतानन्दः)

[2]दमनो- दमनकवृक्षः । मदनं चन्दनात्मकमिति क्वचित्पाठः ।
[3]संधुक्षितः-प्राणितः ।

एवं यः कुरुते पूजामनङ्गस्य महात्मनः ।
भवन्ति नापदस्तस्य तस्मिन्नब्दे कदाचन ॥ इति । (भविष्ये)

## चतुर्दशी

शुक्ला चतुर्दशी ग्राह्या परविद्धा सदा व्रते ।
शुक्लपक्षोऽष्टमी चैव शुक्लपक्षे चतुर्दशी । (व्यासः)
पूर्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुता ॥ (निगमः)

इति वचनात् शुक्ला चतुर्दशी परविद्धा ग्राह्या । कृष्णचतुर्दशी तु पूर्वविद्धा ग्राह्या ।

---

१) कामदेव इति श्लोकस्तु देवीपुराणे (अ ६१/१७ १८) अपि वर्त्तते ।

२) दमनः भाषायां दमरणा इति प्रसिद्धः ।

ଅନଙ୍ଗ ତ୍ରୟୋଦଶୀ

ମାର୍ଗଶିର ଶୁକ୍ଳ ତ୍ରୟୋଦଶୀ ଓ ଚୈତ୍ର ଶୁକ୍ଳ ତ୍ରୟୋଦଶୀ ଅନଙ୍ଗ ତ୍ରୟୋଦଶୀ । ସେ ପୂର୍ବବିଦ୍ଧା ଅଟେ ।

---

पाठा. 1) सन्धूपितः- ग । 2) लवणवारिणा- ग । 3) सन्धूपितः- ग ।

"कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ।
पूर्वविद्धैव कर्त्तव्या परविद्धा न कुत्रचित्" ॥ (आपस्तम्बः)

चैत्रश्रावणचतुर्दश्यौ [1]शुक्लपक्षेऽपि रात्रियोगिन्यौ ग्राह्ये ।

"मधुश्रावणमासस्य शुक्ला या तु चतुर्दशी ।
सा रात्रिव्यापिनी ग्राह्या परा पूर्वाह्णगामिनी" ॥ (बौधायनः)

परा मासान्तरवर्त्तिनी शुक्लचतुर्दशी ।

**दमनकचतुर्दशी**

"मधुमासे तु सम्प्राप्ते शुक्लपक्षे चतुर्दशी ।
प्रोक्ता दमनभञ्जीति सिद्धिदा तु महोत्सवा[1] ॥
पूजयन्ति च ये मर्त्त्यास्तदङ्गनवपल्लवैः ।
ते यान्ति परमं स्थानं दमनस्य प्रभावतः" ॥ (स्कन्दपु.)

पूर्वविद्धा ग्राह्या ।

"[2]सर्वा चतुर्दशी पूज्या युक्ता पूर्णेन्दुना सह ।
अपूज्या पूर्णिमायुक्ता मधौ शुक्ला चतुर्दशी" ॥ (वायुपु.)

**[2]नृसिंहचतुर्दशी**

"शुक्लपक्षे चतुर्दश्यां मासि माधवसञ्ज्ञके ।
प्रादुर्भूतो नृपञ्चास्यस्तस्मात्तां समुपोषयेत् ॥
अनङ्गेन समायुक्ता न सोपोष्या चतुर्दशी ।
पूर्णायुक्तां तु तां कुर्यान् नरसिंहस्य [3]तुष्टये ॥

---

१) महान् उत्सवः यस्यां सा ।
२) श्रीजगन्नाथमन्दिरे तु दमनोत्सवः उदयवेधेन क्रियते ।

ଚତୁର୍ଦ୍ଦଶୀ ଶୁକ୍ଳପକ୍ଷରେ ପରବିଦ୍ଧା ଓ କୃଷ୍ଣପକ୍ଷରେ ପୂର୍ବବିଦ୍ଧା ଅଟେ । କିନ୍ତୁ ଚୈତ୍ର ଶୁକ୍ଳ ଚତୁର୍ଦ୍ଦଶୀ ଓ ଶ୍ରାବଣ ଶୁକ୍ଳ ଚତୁର୍ଦ୍ଦଶୀ ପ୍ରଦୋଷବ୍ୟାପିନୀ ଗ୍ରାହ୍ୟା ।

ଦମନକ ଚତୁର୍ଦ୍ଦଶୀ

ଚୈତ୍ର ଶୁକ୍ଳଚତୁର୍ଦ୍ଦଶୀ ଦମନକ ଚତୁର୍ଦ୍ଦଶୀ, ସେ ପୂର୍ବବିଦ୍ଧା, (କିନ୍ତୁ ଜଗନ୍ନାଥଙ୍କ ମନ୍ଦିରରେ ଦମନକ ଚତୁର୍ଦ୍ଦଶୀ ସୂର୍ଯ୍ୟୋଦୟବ୍ୟାପ୍ତି ଅନୁସାରେ କର୍ତ୍ତବ୍ୟ) ।

---

पाठा. 1) शुक्लेऽपि- ख, भ । 2) नरसिंह-ख, ङ, भ । 3) तृप्तये- क ।

यः करोति नरो मोहात् कामविद्धां चतुर्दशीम् ।
धनापत्यैर्वियुज्येत तस्मात्तां परिवर्जयेत् ॥
चतुर्दशी न वर्त्तेत सायंकाले दिनद्वये ।
परैव वर्त्तते वाऽपि कर्त्तव्या सा तदैव तु ॥
स्पृशेत् परदिन[1] चेत् सा सायंकाल चतुर्दशी ।
कर्त्तव्या, त्वन्यथा पूर्वा नरसिंहप्रियातिथिः"॥ इत्यादि वचनात् परदिने [1]सायंकाले चतुर्दशीस्पर्शाभावे एव पूर्वविद्धा ग्राह्या । अन्येषु तु पक्षेषु परविद्धा ग्राह्या ।

## अघोरचतुर्दशी

"भाद्रे मासि सिते पक्षे अघोराख्याचतुर्दशी ।
तामुपोष्य नरो याति शिवलोकं[2] सनातनम्" ॥ (भविष्योत्तरम्)

## अनन्तव्रतचतुर्दशी

"अनन्तव्रतमेतद्धि सर्वपापहरं शुभम् ।
सर्वकामप्रद नृणां स्त्रीणां चैव युधिष्ठर" ॥

---

१) साय नाम दिनमानस्य रात्रेश्चान्तिमादिघटिकाद्वयम् । नोभयव्याप्तौ परेद्युरेवेति कृत्यकौमुदीकाराः । यद्यपि नरसिंहपुराणे—
"तावद्धता युध्यमाना दैत्याः कोटिसहस्रशः ।
नरसिंहेन यावच्च नभोभागं गतो रविः ॥" ४४–२७
इति सूर्यास्तात् पूर्वं दैत्यबलक्षयोवर्णितस्तथापि समाचारान् सूर्यास्तकाल एव नृसिंहस्य जन्मकालरूपेण ग्राह्यः ।

ନୃସିଂହ ଚତୁର୍ଦ୍ଦଶୀ

ବୈଶାଖ ଶୁକ୍ଳ ଚତୁର୍ଦ୍ଦଶୀ ନୃସିଂହ ଚତୁର୍ଦ୍ଦଶୀ । ସାୟଂକାଳ (ଦିବସ ଶେଷ ଦ ୧.୫ ଓ ରାତିର ପ୍ରଥମ ଦ ୧.୫) ଜନ୍ମକାଳ । ଉଭୟଦିନ ସାୟଂକାଳକୁ ଥିଲେ ପରଦିନ, ପରଦିନ ସାୟଂକାଳକୁ ନ ଥିଲେ ପୂର୍ବଦିନ ଦେବ

ଭାଦ୍ର ଶୁକ୍ଳ ଚତୁର୍ଦ୍ଦଶୀ ଅଘୋର ଚତୁର୍ଦ୍ଦଶୀ ।

---

पाठा. 1) दिने–क, ख । 2) कमयत्नतः- ख, ग, भ ।

मध्याह्ने भोजनवेलायां समुत्तीर्य सरित्तटे ।
ददर्श शीला सा स्त्रीणां समूहं रक्तवाससम्'' ।।
चतुर्दश्यामचर्चयन्तं भक्त्या देवं पृथक् पृथक् ।। इति (भविष्यपु.)

वचनात् मध्याह्नः कर्मकाल इति चेन्न । ''पूर्वाह्णो वै देवाना'मिति श्रुत्या दैवकृत्ये विहितस्य पूर्वाह्णस्य विध्यसमभिव्याहृतार्थवादेन बाधायोगात् । किन्तु तस्यैव गौणकालबोधकं तत् । भविष्ये तु—

''[1]आराधिते महेन्द्रे तु ध्वजाकारासु यष्टिषु ।
ततः शुक्लचतुर्दश्यामनन्तं पूजयेद्धरिम् ।।

अत्र तिथ्यन्तरवत् त्रिमुहूर्त्तो मुख्यः । ''दैवे ह्यौदयिकी ग्राह्या''इति वचनेन द्विमुहूर्त्तस्त्व[2]नुकल्पः । उदये द्विमुहूर्त्ताऽपि ग्राह्यानन्तव्र[1]तादिष्विति ।

## चित्राकृष्णचतुर्दशी

''कार्त्तिके भौमवारे तु चित्राकृष्णचतुर्दशी ।
तस्यामाराधितः स्थाणुर्नयेत् शिवपुरं ध्रुवम् ।।
यां कांचित् सरितं प्राप्य कृष्णपक्षे चतुर्दशीम् ।
यमुनायां विशेषेण नियत तर्पयेद् यमान् ।।
[3]यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वभूतक्षयाय च ।।

---

१) आराधित इति श्लोकः अग्निपुराणेऽपि (१९२–७) वर्त्तते ।

२) द्विमुहूर्त्तव्याप्तिम् अनुकल्पत्वेन ग्रन्थकृत् स्वीकरोति । गदाधरस्तु न स्वीकुरुते ।

३) मत्स्यपुराणस्य (१०१/२१-२२) श्लोकयोरयमेव पाठः समः । ''चित्राकृष्ण-चतुर्द्दशीसंज्ञातः चतुर्द्दश्यां चित्रानक्षत्रयोगः मुख्यः । तेन भौमवारयोगा-भावेऽपि योगो भवेदेव ।

### ଅନନ୍ତବ୍ରତ

ଭଦ୍ର ଶୁକ୍ଳ ଚତୁର୍ଦ୍ଦଶୀ ଅନନ୍ତ ଚତୁର୍ଦ୍ଦଶୀ । ସୋଦୟ ତ୍ରିମୁହୂର୍ତ୍ତ କର୍ମକାଳ । ତଦଭାବେ ସୋଦୟ ଦ୍ୱିମୁହୂର୍ତ୍ତ ଗ୍ରାହ୍ୟ । ପରଦିନ ଦ୍ୱିମୁହୂର୍ତ୍ତରୁ କମିଲେ ପୂର୍ବଦିନ ଉଦୟକୁ ଚତୁର୍ଦ୍ଦଶୀ ନ ଥିଲେ ମଧ୍ୟ ପୂର୍ବଦିନ ଅନନ୍ତବ୍ରତ କରାଯିବ ।

---

पाठा. 1) व्रते तिथिरिति- ख, घ, झ । कालमाधवेऽपि अयं पाठः ।

औदुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः ।।
एकैकस्य तिलैर्मिश्रान् त्रींस्तु दद्याज्जलाञ्जलीन् ।
संवत्सरकृतं पापं तत्क्षणादेव नश्यति" ।। (भविष्यपु.)

## पाषाणचतुर्दशी

"वृश्चिके शुक्लपक्षे तु या पाषाणचतुर्दशी ।
तस्यामाराधयेद्देवीं नक्तं पाषाणभोजनैः ।।
ऐश्वर्य्यसौख्यसौभाग्य रूपाणि प्राप्नुयान्नरः" ।। (देवीपु.)

पाषाणाकारपिष्टक इति जीमूतवाहनः । नक्तमिति–वचनान्नक्तकालः प्रधानम् । यदा तूभयरात्रौ चतुर्दशीसम्भवः तदा परदिने पूजादिकं कार्यम् ।

## माघकृष्णचतुर्दशी

"माघे मास्यसिते पक्षे रटन्त्याख्या चतुर्दशी ।
तस्यामुदयवेलायां स्नातो नावेक्षते यमम्,' ।। (यमः)

उदयवेलायाम्— अरुणोदयवेलायाम् ।

"अनर्काभ्युदिते काले माघे कृष्णचतुर्दशी ।
सतारव्योमकाले तु तत्र स्नानं महाफलम्" ।।
"माघे मासि रटन्त्यापः कृष्णपक्षे चतुर्दशीम् ।
ब्रह्मघ्नमपि चाण्डाल कं पतन्तं पुनीमहे" ।। (भविष्योत्तरपु.)

---

କାର୍ତ୍ତିକ କୃଷ୍ଣଚତୁର୍ଦ୍ଦଶୀ ଚିତ୍ରା ନକ୍ଷତ୍ର ଓ ମଙ୍ଗଳବାର ଯୁକ୍ତ ହେଲେ ଚିତ୍ରା କୃଷ୍ଣଚତୁର୍ଦ୍ଦଶୀ ହୁଏ । ତହିଁରେ ଯମୁନାନଦୀରେ ଅଥବା ଯେ କୌଣସି ନଦୀରେ ଯମ ତର୍ପଣ ବିଧେୟ । ମଙ୍ଗଳବାର ଯୋଗ ନ ଥିଲେ ମଧ୍ୟ କେବଳ ଚିତ୍ରା ଯୋଗରେ ଚିତ୍ରା କୃଷ୍ଣଚତୁର୍ଦ୍ଦଶୀ ଯୋଗ ହୋଇପାରେ) ।

### ପାଷାଣ ଚତୁର୍ଦ୍ଦଶୀ

ମାର୍ଗଶିର ଶୁକ୍ଳ ଚତୁର୍ଦ୍ଦଶୀ ପାଷାଣଚତୁର୍ଦ୍ଦଶୀ । ତାହାର କର୍ମକାଳ ନକ୍ତକାଳ । ଉଭୟଦିନ ପ୍ରଦୋଷକୁ ଚତୁର୍ଦ୍ଦଶୀ ରହିଲେ ପରଦିନ ହେବ ।

"[1]अरुणोदयवेलायामारटन्त्यपि नित्यशः ।
[1]नियुक्ता विष्णुना सर्वाः कस्य पापं पुनीमहे ॥
यां कांचित् सरितं प्राप्य कृष्णपक्षे चतुर्दशीम् ।
यमुनायां विशेषेण नियतस्तर्पयेत् पुमान्" । (वराहपु.)

उभयत्रारुणोदयव्यापि[2]नी चेत्तदा पूर्वारुणोदये स्नानम् । कृष्णचतुर्दशीत्वात् माघसप्तम्युक्तन्यायाच्च[2] ।

## शिवरात्रिव्रतम्

तदपि नित्यं काम्यं च । अकरणे प्रत्यवायः स्मर्यते ।

शिवरात्रिमधिकृत्य—

"न पूजयति भक्त्येशं रुद्रं त्रिभुवनेश्वरम् ।
जन्तुर्जन्मसहस्रेषु भ्रमते नात्र संशयः" । इति[3] (स्कन्दपु.)

तथा—"[3]वर्षे वर्षे" इति वीप्सा ।

"माघकृष्णचतुर्दश्यां यः शिवं शंसित[4]व्रतः ।
मुमुक्षुः पूजयेन्नित्यं स लभेदीप्सितं फलम्" ॥

नित्यमिति वचना[4]न्नित्यत्वम् ।

"एवमेतत व्रतं कुर्यात् प्रतिसंवत्सरं व्रती ।
द्वादशाब्दिकमेतत् स्याच्चतुर्विंशाब्दिकं तथा ॥

---

१) "आरटन्ती च सर्वदे"ति कल्पतरौ ब्राह्मपाठः (नियत ४३६) ।

२) यस्यां कस्यांचिदपि कृष्णचतुर्द्दश्यां भौमवारयोगे यमुनायां यमतर्पणमाह दक्षः २/५२"अङ्गारकदिने प्राप्ते कृष्णपक्षे चतुर्द्दशी । यमुनायां विशेषेण नियतो नियताशनः ।इति। यमतर्पणं च"यमाय धर्मराजायेत्या"द्युक्तमेव ।

३) वर्षे वर्षे महादेवि नरो नारी पतिव्रता ।
शिवरात्रौ महादेवं भक्त्या कामं प्रपूजयेत् ॥ इति कालसारे सम्पूर्ण वचनम् ।

४) शंसितव्रतः- प्रशस्तः विशुद्ध इति यावत् ।

ମାଘକୃଷ୍ଣଚତୁର୍ଦ୍ଦଶୀ ଭଉମ୍ୟାପଚତୁର୍ଦ୍ଦଶୀ । ତେଣୁରେ ମାଘସପ୍ତମୀ ନ୍ୟାୟ ପ୍ରଯୁଜ୍ୟ ଅଟେ ।

---

पाठा. 1) निर्मुक्ता- ङ । 2) व्याप्तिश्चे- भ । 3) इति= भ पाठः ।
4) वचनादपि नित्यत्वम्- ङ, भ ।

सर्वान् कामानवाप्नोति प्रेत्य चेह च मानवः ।

शिवरात्रिव्रतं नाम सर्वपापप्रणाशनम् ॥

आचाण्डालप्रसूतानां भुक्तिमुक्तिप्रदायकम् । इति (ईशानसंहिता)

द्वादशाब्दात्मिकावृत्तियुक्तं चतुर्विंशाब्दात्मिकावृत्तियुक्तं वा काम्यफलसाधनं नरमात्राधिकारिकम् । अत्र उपवासः पूजा जागरणं चेति त्रयं प्रधानम् ।

"उपवासप्रभावेण तथा चैवात्रजागरात् ।

शिवरात्रौ तथा शम्भोर्लिङ्गस्यापि प्रपूजनात् ॥

अक्षयान् लभते लोकान् शिवसायुज्यमाप्नुयात्" । (स्कन्दपु)

([1]एवं च)–"अथवा शिवरात्रिं तु पूजाजागरणैर्नयेत्" ॥ इति वचनम् अशक्तस्य तावन्मात्रेण प्रत्यवायपरिहार इत्येवं परम् । अत्र प्रदोषव्याप्तिरर्द्धरात्रिव्याप्तिश्च द्वयं ग्राह्यम् ।

"प्रदोषव्यापिनी ग्राह्या शिवरात्रि-चतुर्दशी" । (स्मृत्यन्तरम्)

"माघकृष्णचतुर्दश्यां महादेवी महानिशि ॥

शिवलिङ्गतयोद्भूतः कोटिसूर्यसमप्रभः ।

तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः" ॥ (ईशानसंहिता)

एवं सति तिथिद्वैधे पूर्वेद्युरेव प्रदोषनिशीथोभयव्याप्तौ पूर्वेद्युरेव व्रतम् ।

"त्रयोदशी यदा देवि दिनभुक्ति[1]प्रमाणतः ।

जागरे शिवरात्रिः स्यान्निशि पूर्णा चतुर्दशी" ॥ (स्कन्दपु.)

सा शिवरात्रिः, तस्यामेव व्रतम् इत्यर्थः ।

परेद्युरेव प्रदोषनिशीथोभयव्याप्तौ तत्रैव व्रतम् ।

"निशाद्वये चतुर्दश्यां पूर्वा त्याज्या परा शुभा,' (कामिकम्) ।

पूर्वदिने [2]निशीथमारभ्य चतुर्दशी परदिननिशीथपर्यन्तं चेद् व्याप्नोति, तदा परत्र व्रतमित्यर्थः ।

पूर्वेद्युः निशीथव्याप्तिः परेद्युः प्रदोषव्याप्तिश्चेत् पूर्वत्र व्रतम् ।

---

१) दिनभुक्तिप्रमाणतः- सूर्यास्तपर्यन्ता ।

---

पाठा. 1) ग, ङ, झ पाठः । 2) निशामारभ्य- क, घ, झ ।

"अर्द्धरात्रात् पुरस्ताच्चेज्जयायोगोऽवगम्यते ।
पूर्वविद्धैव कर्त्तव्या शिवरात्रिः शिवप्रियैः" ॥ (पद्मपु:)
"जयन्ती शिवरात्रिश्च कार्ये भद्राजयान्विते" ॥ (स्कन्दपु.)

इति वचनात् ।

पूर्वेद्युः प्रदोषव्याप्तिर्नास्ति, निशीथव्याप्तिरपि नास्ति चेदुत्तरत्र प्रदोषमात्र[1]व्यापिनी ग्राह्या ।

"[1]जयाप्रयुक्तां न तु जातु कुर्याच्छिवस्य रात्रिं प्रियकृच्छिवस्य"

इति वचनात् ।

पूर्वेद्युः प्रदोषादूर्ध्वं प्रवृत्ता परेद्युः क्षयवशात् प्रदोषादर्वागेव समाप्ता चेत् परेद्युरेव व्याप्तिद्वयाभावात् पूर्वेद्युर्निशीथव्याप्तेः सद्भावात् जयायोगाच्च पूर्वैवोपोष्या ।

त्रिस्पृशायां फलाधिक्यम् ।

त्रयोदशीकला चैव मध्ये चैव चतुर्दशी ।
अन्ते चैव सिनीवाली त्रिस्पृश्यां शिवमर्च्चयेत् ॥

तथा वारविशेषे फलाधिक्यम् ।

माघकृष्णचतुर्दश्यां रविवारो यदा भवेत् ।
भौमो वाथ भवेद्देवि कर्त्तव्यं व्रतमुत्तमम् ॥
शिवयोगस्य योगो वै तद् भवेदुत्तमोत्तमम् ॥(स्कान्देशानसंहिते)

अत्र पूर्वविद्धायामुपवासे, परेद्युस्तिथिमध्ये वा पारणं तिथ्यन्ते वा[2] ।

तिथिनक्षत्रनियमे तिथिभान्ते च पारणम् ॥ इति (सुमन्तु) वचनात् तिथ्यन्ते पारणं प्राप्तम् । यत्तु वचनम्—

उपवासेषु सर्वेषु पूर्वाह्णे पारणं भवेत् ।
तिथ्यन्ते चैव भान्ते च पारणं यत्र चोद्यते ॥

---

१) वचनस्य पूर्वार्द्धं यथा—

"माघासिते भूतदिनं कदाचिदुपैति योगं यदि पञ्चदश्या" इति ।
जया—त्रयोदशी ।

२)वेति नात्र विकल्पः अपितु प्रश्नात्मकः पूर्वपक्षः । तिथिमध्ये इति सिद्धान्तः ।

---

पाठा. 1) मात्रव्यापित्वे सैव ग्राह्या—भ ।

यामत्रयोर्द्ध्ववर्त्तिन्यां प्रातरेव हि पारणम्"। इति(स्मृति)वचनात् यामत्रयोद्र्ध्वव्यापितिथ्यन्तपरम्। तेनात्रापि—

"तिथीनामेव सर्वासामुपवासव्रतादिषु।

तिथ्यन्ते पारणं कुर्याद् विना शिवचतुर्दशीम्"॥ इति (स्कन्दपु.)

चतुर्दशीमध्येऽपि पारणं तदपि यामत्रयादूर्ध्वं चतुर्दश्यन्ते सति द्रष्टव्यम्।

"उपोषणं चतुर्दश्यां चतुर्दश्यां तु पारणम्।

कृतैः सुकृतलक्षैश्च लभ्यते [1]वाथवा न वा॥

ब्रह्मा स्वयं चतुर्वक्त्रैः पञ्चवक्त्रैस्तथाप्यहम्।

[1]सिक्थे सिक्थे फलं तस्य शक्तो वक्तुं न पार्वति" (स्कन्दपु.)

यामत्रयात् पूर्वं तु तिथ्यन्ते तिथ्यन्त एव पारणमिति माधवाचार्यव्यवस्था। वस्तुतोऽत्र "तिथ्यते पारणं कुर्याद् विना शिवचतुर्दशीम्" इति तिथ्यन्त-पारणविधौ शिवरात्रिपर्य्युदासात् यामत्रयात् पूर्वमपि तिथ्यन्ते चतुर्दश्यामेव पारणम्।

"उपोषणं चतुर्दश्यां चतुर्दश्यां तु पारणम्" इति वचनस्य गुणफल-सम्बन्धपरस्य निरवकाशत्वेन बलवत्त्वाच्च। तिथ्यन्तपारणवचनस्य व्रतान्तरसावकाशत्वात् नित्यत्वाच्च काम्याद् दुर्बलत्वाच्च। केवल श्राद्धकारिणा नित्यस्यकरणे गुणफलकामना न कर्त्तव्या। तस्य यामत्रयोर्ध्वं तत्पूर्वं वा तिथ्यन्ते दर्शश्राद्धं कृत्वा पारणकरणमेव शा[2]स्त्रार्थं इति।

१) सिक्थे सिक्थे- प्रतिग्रासम्।

ଶିବରାତ୍ରି

ଫାଲ୍‌ଗୁନ କୃଷ୍ଣ ଚତୁର୍ଦ୍ଦଶୀ ଶିବରାତ୍ରି। ନରମାତ୍ର ତାହାର ଅଧିକାରୀ। ତହିଁରେ ଉପବାସ ପୂଜା ଓ ରାତ୍ରିଜାଗରଣ ତିନୋଟି ପ୍ରଧାନ କର୍ମ। ପ୍ରଦୋଷ ଓ ନିଶୀଥ ଉଭୟ ତାହାର ଗ୍ରାହ୍ୟକାଳ। ଦୁଇଦିନ ନିଶୀଥ (ଅର୍ଦ୍ଧରାତ୍ର)କୁ ଚତୁର୍ଦ୍ଦଶୀ ଥିଲେ ବା ନ ଥିଲେ ପରଦିନ ଶିବରାତ୍ରି ହେବ। ଶିବରାତ୍ରି ବ୍ରତର ପରଦିନ ଚତୁର୍ଦ୍ଦଶୀ ତିଥି ଥିଲେ ମଧ୍ୟ ତିଥି ମଧ୍ୟରେ ପାରଣ କରାଯାଇପାରିବ।

पाठा. 1) चाथवा- ग। 2) शस्तमिति- ग।

## [1]चैत्रकृष्णचतुर्दशी

"चैत्रे मासि चतुर्दश्यां मदनस्य महोत्सवः ।
जुगुप्सितोक्तिभिः कार्यो गीतवाद्यादिभिर्नृप ॥
भगवांस्तुष्यते कामः पुत्रपौत्रसमृद्धिदः" ॥
"न मानयन्ति ये गर्वान् मद्दिन मानवाधमाः ।
तेषां पुण्यफलं दत्तं मया ते चैत्रमासिक" ॥

ते तुभ्यमसुराय ।

"चैत्रकृष्णचतुर्दश्यां यः स्नायाच्छिवसन्निधौ ।
पिशाचत्वं न तस्य स्यात् गङ्गायां तु विशेषतः ॥
चैत्रकृष्णचतुर्दश्यामङ्गारकदिनं भवेत् ।
पिशाचत्वं पुनर्न स्याद् गङ्गायां स्नानभोजनात्" ॥(शतानन्दः)

## स्नुहीचतुर्दशी

"धवलितकलशन्यस्तरक्तपताका स्नुहीभवने ।
चैत्रासितभूतदिने पापरुज [1]दूरतोधत्ते" ॥ (राजमार्त्तण्ड.)

चैत्रकृष्णचतुर्दश्यां पिष्टादिभिः शुक्लीकृतघटे स्नुहीशाखां रक्तपताका-युक्तां विधाय गृहोपरि स्थापयेत् ।

---

१) चैत्रकृष्णचतुर्दश्यां मदनोत्सवः । तत्र अश्लीलकथनस्य विधेयत्वात् अश्लीलकथनस्य च गर्हितत्वात् उत्कलदेशे तस्य उत्सवस्य प्रचलनं नास्तीति कालसारे । वस्तुतस्तु उत्कलदेशे तत्समाचारो नास्ति । शिवसन्निधिस्नानादौ विरोधाभावात् तत् विधेयमेव । "चैत्रकृष्णे"ति पुलस्त्यवचनमितिकमलाकरः । तद्वचनं "चैत्रशुक्लचतुर्द्दश्या'मिति देवल-वचनमिति च रघुनन्दनस्तिथितत्त्वे-१३३। कमलाकरस्तु चैत्रपूर्णिमानन्तरं तदुत्सवं दर्शयन् पूर्णिमान्तवैशाखकृष्णपक्षे एव दर्शयति । तथावारुणी-स्नानमपि चैत्रपूर्णिमानन्तरं दर्शयन् सदाचारविरोधमाचरति ।

ଚୈତ୍ର କୃଷ୍ଣଚତୁର୍ଦ୍ଦଶୀ ମଦନଚତୁର୍ଦ୍ଦଶୀ । ସେଥିରେ ଶିବଙ୍କ ନିକଟରେ ସ୍ନାନ କରିବେ ।
ଚୈତ୍ର କୃଷ୍ଣଚତୁର୍ଦ୍ଦଶୀ ସୁହୀଚତୁର୍ଦ୍ଦଶୀ । ସେଦିନ ରକ୍ତ ପତାକାଯୁକ୍ତ ସିଜୁଗଛକୁ ନାଲିପତାକାସହ ପିଠଉଳେଲା ମାଠିଆରେ ପୋତି ଘର ଛାତରେ ରଖିବ ।

---

पाठा. 1) दूरतोऽभिधत्ते–क ।

## पौर्णमासी

उपवासे [1]सा चतुर्दशीयुता ग्राह्या युग्मात् ।

"एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी ।
अमावास्या तृतीया च ता उपोष्याः परान्विताः" ॥ (बृहस्पतिः)

अत्र [1]उपवासशब्दो व्रतपरः । व्रते परविद्धा ग्राह्या इत्यर्थः ।

"भूतविद्धा न कर्त्तव्या अमावास्या[2] च पूर्णिमा ।
वर्जयित्वा मुनिश्रेष्ठः सावित्रीव्रतमुत्तमम्" इति ॥ (ब्रह्म वै.पु)

"पक्षान्ते स्रोतसि स्नायात्तेन नायाति मत्पुरम्"॥इति यमवचनम्

"पौर्णमासीषु चैतासु मासर्क्षसहितासु च ।
एतासां स्नानदानाभ्यां फलं दशगुणं स्मृतम्" ॥ (स्कान्दमात्स्ये)

"दृश्येते सहितौ यस्यां दिवि चन्द्रबृहस्पती ।
पौर्णमासी तु महती ज्ञेया[3] संवत्सरै तु सा ॥९
तस्यां स्नानोपवासाभ्यामक्षयं परिकीर्त्तितम् (विष्णुः ४९-१०)

सहितौ माससंज्ञादिनिमित्तककृत्तिकादिनक्षत्रगतौ । महाकार्त्तिक्यादि-दर्शनात् ।

"[2]माससंज्ञे यदा ऋक्षे चन्द्रः सम्पूर्णमण्डलः ।
गुरुणा याति संयोगं सा तिथिर्महती स्मृता" ॥ (गार्ग्यः)

'आषाढी कार्त्तिकी माघी वैशाखीषु च[4] यत् कृतम् ।
तदनन्तफलं प्रोक्तं स्नानदानजपादिकम्" ।। (महाभारतम्)

---

१) उपवासः उपोषणमात्रम् । व्रतशब्दस्तु नक्तादिष्वपि सामान्यः पूजादि-सहितः ।

२) कार्त्तिकपूर्णिमायां कृत्तिकानक्षत्रे चन्द्रबृहस्पत्योर्योगे महाकार्त्तिकी, तथा मार्गशिरपूर्णिमायां मृगशिरसि चन्द्रबृहस्पत्योर्योगे महामार्गशीर्षी, तथा पौषपूर्णिमायां पुष्यानक्षत्रे चन्द्रबृहस्पत्योर्योगे महापौषीत्यादि ।

ପୂର୍ଣ୍ଣିମା ଉପବାସରେ ପୂର୍ବବିଦ୍ଧ ଓ ବ୍ରତରେ ପରବିଦ୍ଧ ହୁଏ । ମାସ ସଂଜ୍ଞକନକ୍ଷତ୍ରରେ ଚନ୍ଦ୍ରବୃହସ୍ପତି ମିଳିତ ହୋଇ ରହିଲେ ତାକୁ ମହତି ବୋଲାଯାଏ । ଯଥା କାର୍ତ୍ତିକ ପୂର୍ଣ୍ଣିମାରେ କୃତ୍ତିକା ନକ୍ଷତ୍ରରେ ଚନ୍ଦ୍ର ଓ ବୃହସ୍ପତି ରହିଲେ ମହାକାର୍ତ୍ତିକୀ । ଏହିପରି ମହାପୌଷୀ ପ୍ରଭୃତି ।

---

पाठा. 1)सा च चतु-ग । 2)वास्याथ-ख,घ,ङ,झ । 3) प्रोक्ता-विष्णुस्मृतौ ।
4) कृत च यत् घ,ङ,झ ।

## स्नानयात्रा

"मासि ज्येष्ठे तु सम्प्राप्ते नक्षत्रे [1]शक्रदैवते ।
पौर्णमास्यां तदा स्नानं सर्वपापहरं स्मृतम्" ॥ (ब्रह्मपु. ६५-३)
"तस्मिन्काले तु ये मर्त्याः पश्यन्ति पुरुषोत्तमम् ।
बलभद्रं सुभद्रां च ते यान्ति पदमव्ययम् ॥
कपिलाशतदानेन यत् फलं पुष्करे स्मृतम् ।
तत् फलं कृष्णमालोक्य मञ्चस्थं[2] लभते नरः" ॥

## महाज्यैष्ठी

"[3]महाज्यैष्ठ्यां तु यः पश्येत् पुरुषः पुरुषोत्तमम् ।
विष्णुलोकमवाप्नोति मोक्षं गङ्गाम्बुमज्जनात्" ॥ (ब्रह्मपु.)
"ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा ।
पूर्णिमा गुरुवारेण महाज्यैष्ठी[1] प्रकीर्त्तिता" ॥ (कूर्मपु.)
ऐन्द्रे- ज्येष्ठायाम । प्राजापत्ये- रोहिण्याम् । विना गुरुवारेणापि ।
"ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा ।
पूर्णिमा ज्येष्ठमासस्य महाज्यैष्ठी प्रकीर्त्तिता" ॥(ज्योतिःशास्त्रम्)

---

१) शक्रदैवतं- ज्येष्ठानक्षत्रम् ।

२) मञ्चस्थं-स्नानमण्डपस्थम् ।

३) गुरुचन्द्रयोः ज्येष्ठानक्षत्रस्य एकांशगामित्वे सति महाज्यैष्ठीति स्कान्देपि उक्तम् । "ज्येष्ठस्य विमले पक्षे या वै पञ्चदशी भवेत् । शक्रर्क्षैकांशगौ चन्द्रगुरू च गुरुवासरे(३९/१९)। शुभे योगे महाज्यैष्ठी सर्वपापप्रणाशिनी । तथा— महाज्यैष्ठीमहापुण्या भगवत्प्रीतिवर्द्धिनी । तस्यां सम्पूज्य देवेशं जगन्नाथं कृपार्णवम् । दृष्ट्वा च स्नाप्यमानं तं पापकोशात् विमुच्यते"(३२/२५ तेन तयोरेकांशगतत्वं प्रशस्ततरमेकराशिगतत्वं प्रशस्तमिति । दशम्यादि ज्येष्ठापञ्चकं च तत्र मृग्यम् ।

ଜ୍ୟେଷ୍ଠ ପୂର୍ଣ୍ଣିମାରେ ଜଗନ୍ନାଥ ବଳଭଦ୍ର ସୁଭଦ୍ରାଙ୍କ ସ୍ନାନଯାତ୍ରା ଦର୍ଶନ କଲେ ବହୁ ପୁଣ୍ୟ ହୁଏ ।

---

पाठा. 1) ज्येष्ठीति की-ख, ग, घ, ङ, झ ।

अनुराधास्थगुरावपि ।

"ऐन्द्रे मित्रे तथा जीवस्तत् पञ्चदशके रविः ।

पूर्णिमा [1]शक्रचन्द्रेण महाज्यैष्ठी प्रकीर्त्तिता" ।

अनुराधास्थे चन्द्रेऽपि ।

"ऐन्द्रर्क्षे त्वथवा मैत्रे गुरुचन्द्रौ यदा स्थितौ ।

पूर्णिमा ज्येष्ठमासस्य महाज्येष्ठी प्रकीर्त्तिता" ॥ (व्याघ्रभूतिः)

"[1]आषाढीकार्त्तिकीमाघीतिथयो [2]मुख्यसम्भवाः ।

अप्रदानव्रतो यान्तु यस्यार्योऽनुमतो गतः" ।। इति वचनेन[3] तासु पौर्णमासीषु दानमावश्यकम् ।

## श्रावण्यां बलदेवादिपूजा

"अमावास्यां तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति ।

सुखरात्रेरुषःकाले प्रदीपोज्वलितालये ।।

गावोमहिष्यश्छागाद्याः पूज्याः शोभ्यास्त[4]दा दिने ।

पूजनं केचिदिच्छन्ति श्रावण्यां तु गवादीनाम्" ।।

पक्षद्वयस्य [2]देशाद्यपेक्षया विकल्पः ।

---

१) आषाढीतिवचनं रामायणे अयोध्याकाण्डे भरतशपथवाक्यमिति तिथितत्त्वे । मुद्रितरामायणे तु नोपलभ्यते ।

२) अस्मद्देशे श्रावणपूर्णिमायामेव गोपूजा क्रियते ।

### ମହାଜ୍ୟୈଷ୍ଠୀ

୧-ଜ୍ୟେଷ୍ଠା ନକ୍ଷତ୍ରରେ ଚନ୍ଦ୍ର ଓ ବୃହସ୍ପତି ଏବଂ ରୋହିଣୀରେ ସୂର୍ଯ୍ୟ ଥାଇ ଜ୍ୟେଷ୍ଠ ପୂର୍ଣ୍ଣିମା ଗୁରୁବାରରେ ପଡ଼ିଲେ ମହାଜ୍ୟୈଷ୍ଠୀ ମୁଖ୍ୟ ଯୋଗ ହୁଏ । ୨-ତଥା ଗୁରୁବାରରେ ମଧ୍ୟ ଉକ୍ତ ଯୋଗ ପଡ଼ିଲେ କିମ୍ବା ୩-ଅନୁରାଧାରେ ଚନ୍ଦ୍ର ଥାଇ ଗୁରୁବାର ହୋଇ ନଥିଲେ କିମ୍ବା ୪-କେବଳ ଅନୁରାଧାରେ ଚନ୍ଦ୍ର, ବୃହସ୍ପତି ଦୁହେଁ ଥିଲେ ମଧ୍ୟ ଜ୍ୟେଷ୍ଠ ପୂର୍ଣ୍ଣିମା ମହାଜ୍ୟୈଷ୍ଠୀ ହୁଏ ।

---

पाठा. 1) शुक्र-ङ । 2) पुण्य- इति तिथितत्त्वपाठः (पृ १३५) । 3) नात्-ङ, घ, झ । 4) स्तथादिने ग,ज,छ,झ । स्तथापरे- ङ ।

"श्रावण्यां पौर्णमी[1] यत्र मध्याह्नव्यापिनी यदि ।
उत्थाने बलदेवस्य नन्दाविद्धां तु[2] वर्जयेत् ।
नन्दायुक्तपौर्णमास्यां कृत उत्थापने बलेः ;
तत्र रोगी भवेद्विप्रो गावो नश्यन्त्यनेकधा ॥
पौर्णमास्यां सनन्दायां यत्र उत्थाप्यते बलः ।
गवां तत्र भवेद्रोगो दुर्भिक्षं च तथा भवेत्" ॥ (पद्मपु.)
"श्रावणी दुर्गनवमी तथा दुर्वाष्टमी च या ।
पूर्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम्" ॥ इति (नारदः)
(तिथि[3]द्वैधे पूर्वदिने) रौद्रत्वादपराह्णेऽपि पूजानुष्ठानमित्यर्थः ।

## इन्द्रपूणिमा

"पञ्चदश्यां महेन्द्रञ्च पूजयेत् केलिकौतुकैः ।
गीतवादित्रमाङ्गल्यैर्भूतये भूपतिर्निशि" ॥ (शतानन्दसंग्रहः)

## कोजागारकृत्यम्

"आश्विने पौर्णमास्यां तु चरेज्जागरणं निशि ।
कौमुदी सा समाख्याता कार्या लोकविभूतये ॥
कौमुद्यां पूजयेल्लक्ष्मीमिन्द्रमैरावते स्थितम् ।
सुगन्धैर्निशि सर्वेषा[4]मक्षैर्जागरणं निशि" ॥ (लिङ्गपु)
तथा– "निशीथे वरदा लक्ष्मीः को जागर्त्तीतिभाषिणी ।
तस्मै ऋद्धिं प्रयच्छामि अक्षैः क्रीडां करोति यः ॥

---

କର୍ତ୍ତିକ ଅମାବାସ୍ୟାପରି ପ୍ରତିପଦାରେ କିମ୍ବା ଶ୍ରାବଣ ପୂର୍ଣ୍ଣିମାରେ ଗୋରୁ ମହିଷ ଓ ଗୃହପ୍ରଭୃତିଙ୍କର ଭୂଷଣାଦି ଉତ୍ସବ କରିବେ । ଓଡ଼ିଶାରେ ଶ୍ରାବଣ ପୂର୍ଣ୍ଣିମାରେ ଏ ଉତ୍ସବ ପାଳିତ ହୁଏ । ଏହାର କର୍ମକାଳ ମଧ୍ୟାହ୍ନ । ପରଦିନ ମଧ୍ୟାହ୍ନକୁ ଥିଲେ ବା ନଥିଲେ ପୂର୍ବଦିନ ହେବ ।

ଭାଦ୍ର ପୂର୍ଣ୍ଣିମାରେ ଇନ୍ଦ୍ର ପୂଜା କରିବେ ।

---

पाठा. 1) पूर्णिमा-झ । श्रावणीपौर्णमी–घ । 2) विव- झ । 3)ग,झ पाठः ।
4) सर्वेश= क,ख,ग,झ । सद्वेशै रक्षैर्जागरणं चरेत्" कृत्यकौमुद्याम् ।

"नारिकेलैश्चि[1]पिटकैः पितॄन् देवान् समर्च्चयेत् ।
बन्धूंश्च प्रीणयेत्तेन सार्थं तदशनो भवेत्" ॥ (लिङ्गपु.)
"[2]को जागर्त्तिवचोऽभिधाय पुरुषं लक्ष्मीस्त्यजेत् सुप्तकं,
शुक्ले पञ्चदशीनिशीथसमये लोकस्ततो जागृयात्" । (विष्णुः)
"एवं कृत्वा विधानेन द्यूतक्रीडां समाचरेत् ।
ताम्बूलैर्नारिकेलैश्च वस्त्रैश्चैव कपर्दकैः ॥
परस्परं च दातव्यं पूज्यदेवीं समर्च्चयेत् ।
एवं यः कुरुते भक्त्या तस्य देवी प्रिया भवेत्" ॥ (भविष्योत्तरम्)

अत्र निशेति निशीथेति चाभिधानाद्रात्रिकृत्यमिदम् । यद्दिने प्रदोष-निशीथोभयव्यापिनी पौर्णमासी तद्दिने कोजागरकृत्यम् । उभयका[3]ल-व्याप्त्यनुरोधात् । यदा तु पूर्वदिने निशीथव्याप्तिः परदिने प्रदोषव्याप्ति-स्तदा परेद्युरेव कृत्यं प्रधानपूजाकालव्याप्त्यनुरोधात् । यदा तु पूर्वेद्यु-र्निशीथव्याप्तिः परेद्युर्न प्रदोषव्याप्तिस्तदा सुतरां पूर्वेद्युस्तत्कृत्यम् ।

"अहःसु तिथयः पुण्याः कर्मानुष्ठानतो दिवा ।
नक्तादिव्रतयोगे तु रात्रियोगो विशिष्यते" ॥ (जाबालिः)

इति वचनात् ।

---

१)तिथितत्त्वकारा अत्र कृत्यकौमुद्युद्धृतं "नारिकेलोदकं पीत्वा अक्षैर्जागरणं निशि । तस्मै वित्तं प्रयच्छामि कोजागर्त्ति महीतले" इति वचनं प्रदर्शित-वन्तः । कृत्यकौमुद्यां तु "नारिकेलोदकमिति स्थाने 'नारिकेलरस''-मिति पाठो लभ्यते । तद्वचनं च "कौमुद्या"मिति वचनानन्तरमुदाहृतम् ।

କୁମାରପୂର୍ଣ୍ଣିମା

ଅଶ୍ୱିନପୂର୍ଣ୍ଣିମାରେ କୋଜାଗରକୃତ୍ୟ । ପ୍ରଦୋଷ ଓ ନିଶୀଥ ଉଭୟ କର୍ମକାଳ । ପୂର୍ବଦିନ ନିଶୀଥ ଓ ପରଦିନ ପ୍ରଦୋଷକୁ ପୂର୍ଣ୍ଣିମା ଛୁଇଁଲେ ପର-ଦିନ ଏବଂ ପୂର୍ବଦିନ ନିଶୀଥକୁ ଥାଇ ପରଦିନ ପ୍ରଦୋଷକୁ ନ ଛୁଇଁଲେ ପୂର୍ବଦିନ କୋଜାଗର ହେବ ।

---

पाठा. 1) लैःपिष्टकैश्च-ग । 2) को जावर्त्ति......समर्च्चयेत्" इत्यन्तः पाठः नास्ति-ग । 3) "कालः" इति नास्ति- ग, घ, ङ, भ । उभय-व्यप्त्यनुभावात्- ङ ।

## [१]पुष्यवन्दापना

"इदं जगत् पुरा लक्ष्म्या[1] त्यक्तमासीत्ततो हरिः ।
पुरन्दरश्च सोमश्च तथा शुक्र[2]बृहस्पती ॥
पञ्चैते पुष्ययोगेन पौर्ण्णमास्यां तपोबलात् ।
अलंकृतं पुनश्चक्रुः सौभाग्योत्साहलक्ष्मीभिः ॥
तस्मान्नरैः पुष्ययोगे तत्र सौभाग्यवृद्धये" । (ब्रह्मपु.)
"धनैर्विप्रांश्च सन्तर्प्य नवैर्वस्त्रैश्च शोभिता[3]न् ।।
ततः पुष्टिकरं हृद्यं भोक्तव्यं घृतपायसम् ।
पुष्ययोगे तु कर्त्तव्यं राज्ञा[4] स्नानं च सर्वदा" ।। (ब्रह्मपु)

"पुष्ययोगेष्वि"तिवचनान्नक्षत्रयोगे पूजावन्दापनादिकं कार्यम् ।
नक्षत्र द्वैधे– "उदये त्रिमुहूर्त्तस्थं नक्षत्रं व्रतदानयोः ।
दिनद्वये तथात्वे तु पूर्वं स्याद् बलवत्तरम्" इतिमाधवीकारः ।

---

१)इदं जगदित्यादीनि ब्राह्माणीति कल्पतरौ । तत्र"सौभाग्यवृद्धये"इत्यनन्तरं "गौरसर्षपकल्केन समालभ्य स्वकां तनुम् । कृतस्नानैस्ततः कार्यमलक्ष्मी-नाशनं परम् । इत्याद्युक्त्वा "धनैर्विप्रांश्च सन्तर्प्य नवैर्वस्त्रैश्च शोभिताः, ततः पुष्टिकरमित्याद्युक्तम् ॥ (नियत ४३५)

२) पौषपूर्णिमायां श्रीजगन्नाथदेवश्रीलिङ्गराजदेवयोरपि अभिषेको भवति तत्र उदयव्यापिनी तिथिरेव ग्राह्या नान्या, "दैवे ह्योदयिकी ग्राह्येति नारदीयोक्तेः । राज्ञां तु न तिथिनियमः किन्तु पुष्यानक्षत्र एव । नक्षत्र-मपि सूर्योदयकालिकं गृह्यते । तदुक्तं कालमाधवे–विष्णुधर्मोत्तर वचनम् । "सा तिथिस्तच्च नक्षत्रं यस्यामभ्युदितो रविः । तथाकर्माणि कुर्वीत ह्रासवृद्धी न कारण"मिति ।

ପୌଷପୂର୍ଣ୍ଣିମା ସୂର୍ଯ୍ୟୋଦୟକୁ ଥିଲେ ଜଗନ୍ନାଥ ଓ ଲିଙ୍ଗରାଜପ୍ରଭୃତି ଦେବତାଙ୍କ ଅଭିଷେକ ହୁଏ । ରାଜାମାନଙ୍କର ପୁଷ୍ୟାନକ୍ଷତ୍ରରେ ଅଭିଷେକ ହୁଏ ।

---

पाठा. 1) लक्ष्मीत्यक्त- ख । 2) पूषा बृहस्पतिः" इति कल्पतरुपाठः-नियत-४३४ । 3) शोभिताः-कल्पतरु-नियत-४३५ । 4) राज्ञां-ख, भ ।

## वह्न्युत्सवपौर्णमासी

"[१]वह्न्युत्सवः सिते पक्षे माघे मास्यार्द्रभे निशि ।
द्वादश्यां पञ्चदश्यां वा भवेद् वह्निमहोत्सवः" ॥ (लिङ्गपु.)

## दोलायात्रा

"[२]नरो दोलागतं दृष्ट्वा गोविन्दं त्रिदशार्चितम् ।
फाल्गुन्यां संयतो भूत्वा गोविन्दस्य पुरं व्रजेत्" ॥(ब्रह्मपु ६३-१८)

## अमावास्या

सा च प्रतिपद्युता ग्राह्या[1] ।

"षष्ठ्यष्टम्यप्यमावास्या उभे पक्षे चतुर्दशी ।
अस्नातानां गतिं यास्ये यद्यहं नागमे पुनः" ।। (वराहपु.)

इति वचनात् अत्र स्नानमावश्यकम् ।

"अमास्नानं गयाश्राद्धं दक्षिणामुखभोजनम् ।
न जीवत्पितृकः कुर्यात् कृ[2]त्वा तु पितृहा भवेत्" ॥ इति[3]

रागप्राप्तस्नाननिषेधकम् । वै[4]धाच्च जीवत्पितृकेणापि स्नातव्यम् ।

---

२) वार्द्रभे इत्यस्य द्वादश्या सहान्वयः । पूर्णिमायामसम्भवात् । वा इति पक्षान्तरम् । तस्य प्रदोषः कर्मकालः युग्मात् , समाचाराच्च ।

३) अत्र सूर्योदयव्याप्ति र्ग्राह्या । संयतपदेन हविष्यब्रह्मचर्यादि विवक्षितम् । स्कान्दे च—फल्गूत्सवं प्रकुर्वीत पञ्चाहानि त्र्यहाणि वा । फाल्गुन्यां पूर्वतो विप्राश्चतुर्दश्यां निशामुखे । वह्न्युत्सवं प्रकुर्वीत दोलामण्डपपूर्वतः । क्षेत्रमा (४३-५) । अत्र श्रीजगन्नाथदेवस्य यात्रा भवति ।

ମାଘ ଶୁକ୍ଳଦ୍ୱାଦଶୀ ବା ପୂର୍ଣ୍ଣିମାରେ ଅଗ୍ନ୍ୟୁତ୍ସବ ହୁଏ । ଏହାର କର୍ମକାଳ ପ୍ରଦୋଷକାଳ ।

ଦୋଳୋତ୍ସବ

ଫାଲ୍‌ଗୁନ ପୂର୍ଣ୍ଣିମାରେ ଦୋଳୋତ୍ସବ ହୁଏ । ତାହାର କର୍ମକାଳ ସୂର୍ଯ୍ୟୋଦୟ ।

---

पाठा. 1) ग्राह्या युग्मात्- घ, भ । 2) कृते-ग,घ,ङ,ज । करणे- भ । 3) इति वचनं रागप्राप्तनिषेधकं- ग । 4) द्वैधे तु- ख । वैधे तु ज । द्वैधे-भ । व्याधो-घ । वैधेऽपि- ज ।

"भोगाय क्रियते यत्तु स्नानं याहृच्छिकं नरैः ।
तन्निषिद्धं दशम्यादौ नित्यं नैमित्तिकं न तु" ।इति वचनाच्च ।
"पुष्ये तु जन्मनक्षत्रे व्यतीपाते च वैधृतौ ।
अमायां च नदीस्नानं पुनात्यासप्तमं कुलम्" ।। (पैठीनसिः)

अमावास्याश्राद्धकालादिव्यवस्था त्वस्मत्कृतश्राद्धदीपेऽनुसन्धेया ।

## सावित्रीव्रतम्

"भूतविद्धा न कर्त्तव्या अमावास्या च पूर्णिमा ।
वर्ज्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमम्" ।। इति (ब्रह्मवै.पु.)

वचनात् पूर्वविद्धा ग्राह्या । यदा चतुर्दश्या[1] अष्टादशनाड्यो भवन्ति तदा सावित्रीव्रतमपि तत्र त्याज्यम् । "[1]भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम्" । इति वचनात् ।

## सप्तपूरिकामावास्या

[2]भाद्रामावास्या सप्तपितृकामावास्येत्युच्यते ।

"[2]अमावास्या च पित्र्येण नक्षत्रेण च संयुता ।
सप्तप्रकाराः पितरौ जाताः कमलसम्भवात् ॥

---

१) "नागो द्वादशनाडीभिर्दिक् पञ्चदशभिस्तथा ।
भूतोष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम्" ।। इति कालमाधवे स्कन्दपुराणवचनम् । तत्र नागः पञ्चमी । दिक्–दशमी । भूतः– चतुर्दशी ।।

२) अमावास्येति वचनद्वयं ब्राह्ममितिकल्पतरौ । तत्र तु—"अमावास्यायां पित्र्ये तु नक्षत्रे सति संयुताः" इति, तथा "श्राद्धं कार्यं स्वसम्पदा"इति च पाठे विशेषः । (नियतकाल ३९६)

ଅମାବାସ୍ୟା ପ୍ରତିପଦ୍‌ଯୁକ୍ତ ହୁଏ ।

ସାବିତ୍ରୀବ୍ରତ

ଜ୍ୟେଷ୍ଠ ଅମାବାସ୍ୟାରେ ସାବିତ୍ରୀବ୍ରତ ହୁଏ । ତାହା ପୂର୍ବବିଦ୍ଧା । ଯଦି ଚତୁର୍ଦ୍ଦଶୀ ୧୮ ଦଣ୍ଡ ଥାଏ ତେବେ ସେଦିନ ସାବିତ୍ରୀବ୍ରତ ନହୋଇ ତାହାର ପରଦିନ ହେବ ।

---

पाठा. 1) चतुर्दश्या अपि–क । 2) पंक्तिरियं नास्ति- ,खग,घ,ङ,झ ।

तेभ्यः पूजा च कर्त्तव्या तत्र सर्वात्मना बुधैः ।
पिण्डो देयस्तथाष्टाङ्गः श्राद्धं कार्यं च सर्वदा" ॥ (ब्रह्मपु.)
"दर्शे [1]सवर्णवटकैः पतिमाराधयन्ति याः ।
ताः सर्वाः सुभगा नार्यः पुत्रवत्यो वराङ्गनाः ॥
न वैधव्यं भवेत्तासां पुनर्जन्मसु सप्तसु" । (पुराणम्)

प्रदीपाऽमावास्या[2] अस्मत्कृते श्राद्धदीपेऽनुसन्धेया ।

## सुखरात्रिः

"कार्त्तिके मासि शुक्लादौ तिथौ च कुसुमांशुकैः ।
सुखाय सुखरात्रिः स्यात् कार्या राष्ट्रसुखाय च" ॥ (धवलसंग्रहे)

शुक्लादावित्यमावास्यायामित्यर्थः ।

"अमावास्यां तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति ।
सुखरात्रेरुषःकाले प्रदीपोज्ज्वलितालये" ॥ (स्मृत्यन्तरम्)
"[1]सुशुभैः कुसुमैर्गन्धैर्दधिगोरोचनाफलैः ।
बन्धून् बान्धवबन्धूंश्च पृच्छेत् कुशलया गिरा ॥

---

१) अमावास्यायां सुखसुप्तिका प्रदीपे लक्ष्मीपूजा चोक्ता ब्राह्मे—
"अमावास्यायां तु देवा कार्त्तिके मासि केशवात् । अभयं प्राप्य सुप्तास्तु सुखं क्षीरोदसानुषु । लक्ष्मीर्दैत्यभयान्मुक्ता सुखं सुप्ताम्बुजोदरे । चतुर्युग-सहस्रं तु ब्रह्मा सुप्तस्तु पङ्कजे । अतोऽर्थं विधिवत् कार्या मनुष्यैः सुखसुप्तिका । दिवा तत्र न भोक्तव्यमृते बालातुराज्जनात् । प्रदोषसमये लक्ष्मीं पूजयित्वा यथाक्रमम् । दीपवृक्षास्तथा कार्याः शक्त्या देवगृहेष्वपि । चतुष्पथ-श्मशानेषु नदीपर्वतवेश्मसु । वृक्षमूलेषु गोष्ठेषु चत्वरेषु गृहेषु च" इत्यादि (नियतकाल ४२२) ।

ଏହି ଅମାବାସ୍ୟା ସୁଖସୁପ୍ତିକାମାବାସ୍ୟା । ପିତୃକାର୍ଯ୍ୟ ନିମନ୍ତେ ଶ୍ରାଦ୍ଧକାଳ ଅନୁସାରେ ତାହାର ନିର୍ଣ୍ଣୟ ହେବ । ଦେବକାର୍ଯ୍ୟ ନିମନ୍ତେ ଉଦୟବେଧ ଗ୍ରାହ୍ୟ ।

---

पाठा. 1) सुवर्ण- ख, झ । 2) मावास्याव्यवस्था- ग, झ ।

पूजयेच्च तथा लक्ष्मीमलक्ष्मीमलनाशिनीम् ।
लक्ष्मीं पञ्चपताकाभि[1]र्ध्वजमेकं गृहे न्यसेत्" ॥ (धवलसंग्रहे)

## दीपावल्युत्सवः

([2] मार्गशीर्षे दीपावल्यमावास्या)

"[1]तुलास्थे दीपदानेन पूजा कार्या महाफला ।
दीपवृक्षाश्च कर्त्तव्या दीपचक्रन्तथापरम् ॥
दीपयात्रा प्रकर्त्तव्या चतुर्दश्यां कुहू[3]षु च ।
सिनीवालीषु अथवा वत्स कार्यं महाफलम्" ॥ (देवीपु.)

एतेन चतुर्दश्यमावास्याप्रतिपत्सु [4]निशासम्बन्धिनीषु दीपदानं प्रतिपादितम् ।

"नरकाय प्रदातव्यो दीपः सम्पूज्य देवताम् ।
ततः प्रदोषसमये दीपान् दद्यान्मनोरमान्" ॥ (भविष्योत्तरम्)

नरकाय नरकगमनपरित्रा[5]णाय ।

---

१) मुद्रितदेवीपुराणेतु—

"तुलास्थे दीपदानेन पूजाकार्या महात्मना ।
दीपवृक्षाः प्रकर्त्तव्या दीपचक्रास्तथापराः ॥ (५९-२२)
दीपयात्रा प्रकर्त्तव्या चतुर्दश्यां कुहूषु च ।
सिनीवाली तथा वत्स तदा कार्यं महाफलम्" । (५९-२३)

କାର୍ତ୍ତିକ ଅମାବାସ୍ୟା ସୁଖରାତ୍ରି । ସେ ଦିନର ରାତ୍ରି ଶେଷଭାଗରେ ଲକ୍ଷ୍ମୀଙ୍କର ନିଦ୍ରାଭଙ୍ଗ ହୁଏ । ଏଣୁ ସେ ଦିନ ରାତ୍ରିରେ ଦୀପ ଜାଳିବ ଓ ଲକ୍ଷ୍ମୀଙ୍କୁ ପୂଜା କରିବ ।

ମାର୍ଗଶିର କୃଷ୍ଣପକ୍ଷର ଚତୁର୍ଦ୍ଦଶୀ, ଅମାବାସ୍ୟା ଓ ତା'ପରଦିନ ପ୍ରତିପଦା, ଏହି ତିନିଦିନର ରାତ୍ରିରେ ଦୀପାବଳୀ ଉତ୍ସବ ହୁଏ । ଚତୁର୍ଦ୍ଦଶୀ ରାତ୍ରିକୁ ଥିଲେ ଦୀପାବଳୀ ଆରମ୍ଭ ହେବ ।

---

पाठा. 1) द्विज–झ, ङ । 2) पंक्तिरियं नास्ति– ख, ग, घ, ङ । 3)कुहूत्सवः- क,ख, । 4)"निशासम्बन्धिनीषु" इति नास्ति-ग । 5)परिहाराय- घ, ङ, झ ।

## [1]बकुलामावास्या

"पौषे तु बकुलक्षीरपायसैस्तर्पयेत् पितॄन्" (धवलसंग्रहः) अमावास्यायामित्यर्थः ।

## पौर्णमासेष्टिकालः

"पर्वप्रतिपदोः सन्धिर्मध्याह्ने वा ततः पुरा ।
अग्न्याधानं पूर्वदिने यागः सन्धिदिने भवेत् ॥
ऊर्ध्वं मध्याह्नतः सन्धावग्न्याधानं च तद्दिने ।
इष्टिं परदिने कुर्य्युरन्ये वाजसनेयिनः ॥
यस्तु वाजसनेयी स्यात् तस्य सन्धिदिनात् पुरा ।
न क्वाप्यग्न्याहितिः[1] किन्तु सदा सन्धिदिने हि सा ॥
सन्धिश्चेत् संगवादूर्ध्वं प्राक् पर्यावर्त्तनाद्रवेः ।
सा पौर्णमासी विज्ञेया सद्यः कालविधौ तिथिः ॥
वृद्धिः प्रतिपदो याऽस्ति तदर्द्धं पर्वणि क्षिपेत् ।
क्षयस्यार्द्धं तथा हित्वा सन्धिं निश्चीयतां सदा" ॥

(माधवाचार्यकारिका) ।

"सन्धिर्यद्यपराह्णे स्याद् यागः प्रातः परेऽहनि ।
कुर्वाणः प्रतिपद्भागे चतुर्थेऽपि न दुष्यति" ॥ (वृद्धशातातपः)

---

१) बकुलामावास्या "पितॄन् तर्पयेदितिवचनात् श्राद्धकालव्यापिनी ग्राह्या । श्रीजगन्नाथमन्दिरादौ तु 'दैवे ह्यौदयिकी"ति वचनात् उदयव्यापिन्येव गृह्यते ।

ପୌଷ ଅମାବାସ୍ୟା ବକୁଳଅମାବାସ୍ୟା ।

ଇଷ୍ଟିକାଳ

ପୂର୍ଣ୍ଣିମା ଓ ପ୍ରତିପଦାର ସନ୍ଧି ଯଦି ମଧ୍ୟାହ୍ନରେ କିମ୍ବା ତତ୍ପୂର୍ବରୁ ହୁଏ ତେବେ ପୂର୍ବଦିନ ଅଗ୍ନ୍ୟାଧାନ ଓ ସେଦିନ ଯାଗ କରାଯିବ । ମଧ୍ୟାହ୍ନ ପରେ ସନ୍ଧି ହେଲେ ସନ୍ଧିଦିନ ଅଗ୍ନ୍ୟାଧାନ ଓ ପରଦିନ ଯାଗ ହେବ । ଶୁକ୍ଳଯଜୁର୍ବେଦୀଙ୍କର ସନ୍ଧିଦିନ ପୂର୍ବରୁ ଅଗ୍ନ୍ୟାଧାନ ହୁଏନାହିଁ କିନ୍ତୁ ସନ୍ଧିଦିନ ହୁଏ ।

---

पाठा. 1) तः– घ, ङ ।

## [1]दर्शेष्टिकालः

"पूर्वेद्युः पितृभ्यो निष्क्रीय परेद्युर्देवेभ्यो ददाती"ति श्रुतेश्चन्द्रक्षयोत्तर-दिन एव दर्शेष्टिकालः । [2]अतएव जीवत्पितृकस्य पितृयज्ञाभावात् अमावास्यायामेवेष्टिरित्यभिप्रेत्य सम्प्रदायग्रन्थे जीवत्पितृकस्य चतुर्दश्यामेवोपवास इत्यभिहितम् ।

[3]विकृतेष्टिकालः—"इष्ट्यादिविकृतिः सर्वा पर्वण्येवेति निश्चयः ।

"[1]आवर्त्तनात् प्राक् यदि पर्वसन्धिः कृत्वा तु तस्मिन् प्रकृतिं विकृत्याः ।
अत्रैव यागः परतो यदि स्यात्तस्मिन् विकृत्याः प्रकृतेः परत्र" ॥(कात्यायनः)

## [4]पक्षादिकालः

"पक्षादावेव कुर्वीत सदा पक्षादिकं चरुम्" छन्दोगपरिशिष्टम्)

"पर्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः ॥
यागकालः स विज्ञेयः प्रातर्युक्तो मनीषिभिः" ॥ (वृद्धशातातपः)

एतत् कालाभावे तु—

'पूर्वाह्ण एव कुर्वन्ति[5] विद्धे स्वल्पे[6] मनीषिणः" ॥(छन्दोगपरि.)

द्वितीयाविद्धप्रतिपद्येव प्रातःकाले कुर्वन्तीत्यर्थः ।

## संक्रान्तिव्यवस्था

"मृगकर्कटसंक्रान्ती द्वे तूदग्दक्षिणायने ।

---

१) आवर्त्तनः सूर्यस्य पश्चिमदिग्गमनारम्भकालः ।

ଚନ୍ଦ୍ରକ୍ଷୟର ପରଦିନ ଦର୍ଶେଷ୍ଟି କାଳ ।

ପର୍ବର ୪ର୍ଥ ଭାଗ ଓ ପ୍ରତିପଦାର ୧ମ ୨ୟ ଓ ୩ୟ ଭାଗ ପକ୍ଷାଦି ଯାଗର କାଳ ଅଟେ । ଉକ୍ତ ସମୟ ଯେଉଁଦିନ ପୂର୍ବାହ୍ଣବ୍ୟାପୀ ଥିବ ସେ ଦିନ ପକ୍ଷାଦି ଯାଗ କରାଯିବ ।

---

पाठा. 1) दर्शेष्विष्टि–क । तत्र पूर्वेद्युरित्यारभ्य विकृतेष्टिकाल"इत्यन्तं पाठो नास्ति । दर्शेष्विष्टि ङ । 2)अत्र-ख । अतः-झ । 3)विकृतेष्टिकालः-छ,ज,झ पाठः (विकृतेष्टिकालः घ) । 4)पक्षादिचरुकालः-ख,गघ,ङ 5) कुर्वीत-क । 6) प्यन्ये-ख,ग,ङ,झ ।

विषुवती तुलामे[1]षौ विष्णुपद्यः स्थिरात्मके ॥
षडशीति द्विशरीरे द्वादशैवं प्रकीर्त्तिता:" ॥

मृगो–मकरः, स्थिराः– वृषसिंहवृश्चिककुम्भराशयः । द्विशरीराः–मिथुन-कन्याधनुर्मीनाः ।

"[1]त्रुटेः सहस्रभागो यः स कालो रविसंक्रमे" । (देवीपु.२४-२५)
"[2]संक्रान्तिसमयः सूक्ष्मो दुर्लक्ष्यः पिशितेक्षणैः ॥
तद्यो[2]गाच्चाप्यधश्चोर्ध्वं त्रिंशन्नाड्यः [3]प्रकीर्त्तिताः" ॥(देवलः)

इदं संक्रान्तिपूर्वापरकालीनषष्टिदण्डात्मकं तदुपलक्षिताहोरात्रपरमुपवासादिविषयं तैलस्त्रीमांसवर्जनविषयं चेति प्राञ्चः ।
[4]संक्रान्तेः पुण्यकालमाह—बृहद्व[5]सिष्ठः—

---

१) सम्पूर्णपाठः- "स्वस्थे नरे सुखासीने यावत् स्पन्दति लोचनम् ।
तस्य त्रिंशत्तमो भागस्तत्परः परिकीर्त्तितः ॥ (देवीपु. २४–२४)
तत्पराच्छतभागस्तु त्रुटिरित्यभिधीयते ।
त्रुटेः सहस्रभागो यः सकालो रविसंक्रमे" इति ॥ (२४-२५)

२) संक्रान्तिसमय इति देवलवचनम् इति कालसारे वसिष्ठवचनमिति समयमयूखे ।

ରବିଙ୍କର ଏକରାଶିରୁ ଅନ୍ୟରାଶିକୁ ଗମନ କରିବାକୁ ସଂକ୍ରାନ୍ତି ବୋଲାଯାଏ । ଏହି ସଂକ୍ରାନ୍ତି ମେଷ ବୃଷାଦି ଭେଦରେ ବାରଗୋଟି । ସେଥିରୁ ମେଷ ଓ ତୁଳାସଂକ୍ରାନ୍ତିକୁ ବିଷୁବ, ମକରସଂକ୍ରାନ୍ତିକୁ ଉତ୍ତରାୟଣ ଓ କର୍କଟ ସଂକ୍ରାନ୍ତିକୁ ଦକ୍ଷିଣାୟନ, ବୃଷ ସିଂହ ବୃଶ୍ଚିକ ଓ କୁମ୍ଭସଂକ୍ରାନ୍ତିମାନଙ୍କୁ ବିଷ୍ଣୁପଦୀ ଏବଂ ମିଥୁନ କନ୍ୟା ଧନୁ ଓ ମୀନସଂକ୍ରାନ୍ତିମାନଙ୍କୁ ଷଡଶୀତି ବୋଲାଯାଏ ।

ସଂକ୍ରାନ୍ତି ସମୟ ଅତି ସୂକ୍ଷ୍ମ । ତେଣୁ ପୂର୍ବାପରଜନକ ତିରିଶଦଣ୍ଡ ଓ ପର ତିରିଶଦଣ୍ଡକୁ ପୁଣ୍ୟକାଳ ବୋଲି ଦେବଳ କହିଛନ୍ତି । ପ୍ରାଚୀନମାନଙ୍କ ମତରେ ଦେବଳବାକ୍ୟର ତାତ୍ପର୍ଯ୍ୟ ହେଉଛି ଯେଉଁ ଅହୋରାତ୍ରରେ ସଂକ୍ରାନ୍ତି ହୋଇଥିବ ସେ ଅହୋରାତ୍ରରେ ଉପବାସ ଓ ସ୍ତ୍ରୀ ତୈଳାଦି ବର୍ଜନ କରଣୀୟ ।

---

पाठा. 1) मेषे- ख, घ, ङ । 2) योगादप्य-ख, झ, योगाश्चाधत- घ, योगश्चाप्य-क । 3) पवित्रताः- झ । 4) संक्रान्ते ... ... ... ... दक्षिणायने" इत्यन्तः पाठो नास्ति क ग,ङ,छ,ज । 5)वृद्धवसिष्ठः- झ ।

"[1]अतीतानागते पुण्ये द्वे तूदग्दक्षिणायने"।

"त्रिंशत् कर्कटके नाड्यो मकरे विंशतिः स्मृताः॥

[2]"[1]अयने विंशतिः पूर्वा मकरे विंशतिः परा।

वर्त्तमाने तुलामेषे नाड्यस्तुभयतो दश"॥ (देवलशातातपौ)

उभयतः तुलामेषयोः।

"[3]षडशीत्यामतीतायां षष्टिरुक्तास्तु नाडिकाः।

पुण्यायां विष्णुपद्याञ्च प्राक् पश्चादपि षोडश"॥(देवलशातातपौ)

---

१) उदगयनम्—उत्तरायणम् अतीतं पुण्यम्। उत्तरायणे अतीते पुण्यकाल इत्यर्थः। तथा दक्षिणायणम् अनागतमेव पुण्यम्। अतः कर्कटसंक्रान्तेः पूर्वकाल एव पुण्यकाल इति भावः।

२) अयने-दक्षिणायने,मकरस्य पृथकीर्त्तनात्। रवौ तुलायां मेषे वा वर्त्तमाने उभयतो दशनाड्यः पुण्याः। अत्र उभयतः— तुलामेषयोर्नतु पार्श्वद्वये "अतीतागते पुण्ये द्वे तूदग्दक्षिणायने। उपरागे तु तत्कालमतीते विषुवद्वये" इति वसिष्ठवचनादिति कृत्यकौमुदीकाराः। ग्रन्थकृतापि तन्मतमङ्गीकृतम्। किन्तु प्रकृतवचने दक्षिणायने पूर्वविंशतेः, मकरे परविंशतेः पुण्यकालत्वकीर्त्तनात् तद्वैलक्षण्येन तुलामेषयोः पार्श्वद्वये दश दश इति विंशतिः दण्डाः पुण्यकाल उक्त इति गम्यते। "मध्ये तु विषुवे पुण्यं प्राग्विष्णो र्दक्षिणायने। षडशीतिमुखेऽतीते अतीते चोत्तरायणे। इति समयमयूखधृतवसिष्ठवाक्येन विषुवसंक्रान्त्योर्मध्यकालस्यैव पुण्यत्व कीर्त्तनमपि "उभयत" इत्यस्य पार्श्वद्वयार्थमनुगृह्णाति। विषुवसंक्रान्त्योर्मध्यरेखागतत्वेन मध्यकालस्य तदुपलक्षितपार्श्वद्वयस्यैव पुण्यकालता युज्यत एव।

३) षडशीतिः—मिथुनकन्याधनुर्मीनसंक्रान्तयः। अत्र वचने "षष्टि" स्थाने कृत्यकौमुद्याम् "अष्टि" रिति पाठो वर्त्तते। तत्र अष्टिः—षोडश इति बृहस्पतिः। अष्टिच्छन्दसि पादानां षोडशाक्षरविशिष्टत्वेन अष्टि पदेन षोडशसंख्या सूच्यते। हेमाद्रिस्तु "षडशीत्याख्यानां चतसृणां संक्रान्तीनाम्

---

पाठा 1) पक्तिरिय- ख पाठः।

"[1]मानार्द्धं भास्करे पुण्यमपूर्णे शर्वरीदले। (१४)

सम्पूर्णे तूभयोर्ज्ञेयमति[1]रिक्ते परेऽहनि" ॥ (देवीपु. २४-११)

**मानार्द्धं भास्करे- भास्करोपलक्षितदिवसेऽर्द्धमित्यर्थः । प्रहरद्वयमिति यावत् ।**

---

एकैकस्याः पञ्चदश पञ्चदश इत्येवं षष्टिनाड्यः पुण्या इत्याह। वचनस्य उत्तरार्द्धे विष्णुपदीसंक्रान्तीनामेकैकशः पुण्यकालकीर्त्तनात् पूर्वार्द्धे षडशीतिसंक्रान्तीनां समूहोक्तिर्न सङ्गच्छते। ते नात्र कृत्यकौमुदीपाठः साधीयान्।

१) मुद्रितदेवीपुराणपाठः यथा –

"यावद्विंशकला भुंक्ते तत्पुण्यमुत्तरायणे। १२। निरंशे भास्करे दृष्टे दिनान्ते दक्षिणायने। अर्द्धरात्रे तु सम्पूर्णे दिवा पुण्यमनागतम्। १३। सम्पूर्णे चार्द्धरात्रे तु उदयास्तमनेऽपि च। मानार्द्धं भास्करं पुण्यमपूर्णे शर्वरीदले।१४। सम्पूर्णे उभयोर्ज्ञेयमविवेके परेऽहनि। षडशीतिमुखेऽतीते वृत्ते च विषुवद्द्वये। १५। भविष्यत्ययने पुण्यमतीते चोत्तरायणे। आदौ पुण्यं विजानीयाद् यदा भिन्ना तिथिर्भवेत्। १६। अर्द्धरात्रे व्यतीते तु विज्ञेया चापरेऽहनि" ॥ इति ॥

देवीपुराणवाक्यानां व्याख्या यथा—

उत्तरायणे— मकरसंक्रान्तौ, रविः यावत् विंशकलाः- विंशतिदण्डान् भुंक्ते तावत्, अर्थात् रवेः मकरराशिभोगात् विंशतिर्दण्डाः पुण्यकालः। दक्षिणायने— कर्कटसंक्रान्तौ भास्करे- सूर्ये निरंशे- अंशरहिते दृष्टे- उपलब्धे सति, कर्कटसंक्रान्तिकाले समायाते सति इत्यर्थः। राशेः प्रथमांशभोगकालो हि निरंशो भवति। तदा दिनान्ते-पूर्वमासान्त-दिवसान्तभागे मिथुनमासान्तभागे पुण्यकालः। अर्द्धरात्रे सम्पूर्णे— अतीते अनागतं- परवर्त्ति दिनं दिनार्द्धमिति यावत् पुण्यम्। "अर्द्धरात्रे त्वसम्पूर्णे" इति कल्पतरूद्धृतपाठे (नियत ३६२) तु असम्पूर्णे न्यूने अर्द्ध-रात्रात् पूर्वम्, अनागतं- भविष्यत् संक्रमणं पुण्यम्। तेन तत्पूर्ववर्त्ति दिनार्द्धं पुण्यमित्यर्थः। अर्द्धरात्रे सम्पूर्णे तथा सूर्यस्य उदयास्तमनयोश्च भास्करं- भास्करोपलक्षितं दिनं, मानार्द्धं- अर्द्धपरिमितं पुण्यम्।

---

पाठा. 1) मतीतेऽर्के- ख।

विशेषमाह- "अर्द्धरात्रादधस्तस्मिन् मध्याह्नस्योपरि क्रिया ।
ऊर्ध्वं संक्रमणे चोद्‌र्ध्वमुदयात् प्रहरद्वयम्" ॥ (वसिष्ठः)
मध्याह्नस्योपरि पूर्वदिवसस्य ।

"सम्पूर्णे चेदर्द्धरात्रे रविसंक्रमणं भवेत् ।
प्राहु र्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ" ॥ (वसिष्ठः)
"आदौ पुण्यं विजानीयात् यद्यभिन्नातिथिर्भवेत्"॥ (देवीपु.२४-१६)

इति वचनात् संक्रान्तिकालीनतिथेः पूर्वदिनगामित्वे पूर्वदिने पुण्यकालः । ( [1]अर्थात् तिथिभेदे उत्तरदिने पुण्यकालः )। एवं सम्पूर्णार्द्धरात्रे [2]रवि संक्रमणे संक्रान्तिकालीनतिथेः पूर्वदिनगामित्वे उभयदिनगामित्वेऽपि पूर्वदिनमध्याह्नादूर्ध्वं पुण्यकालः । संक्रान्तिकालीनतिथेः उत्तरदिनगामित्वे चोत्तरदिनार्द्धमेव पुण्यकाल इति व्यवस्था । 'आदौ पुण्य"मितिवचनस्य दिनद्वयव्यापितिथिकेऽपि प्रवृत्त्यविशेषात् ।

---

तत्र "या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः" इति शातातपवचनात् उदयास्तमनयोस्तत्सन्निहितं दिनार्द्धमेव पुण्यम् । अर्द्धरात्रस्य केन्द्रस्थत्वेन पूर्ववर्त्ति दिनार्द्धं वा परवर्त्ति दिनार्द्धं वा पुण्यमिति संशये व्यवस्थापयति—शर्वरीदले—रात्रेः प्रथमार्द्धे द्वितीयार्द्धे वा अपूर्णे पूर्ववत् मानार्द्धम्। अर्थात् रात्रेः पूर्वभागे संक्रान्तौ पूर्वदिवसस्य अपराह्नः, उत्तरभागे संक्रान्तौ उत्तरदिनस्य पूर्वाह्नः पुण्यः। संपूर्णे अर्द्धरात्रे संक्रान्तौ उभयोः पूर्वापरदिवसयोः । अर्द्धं पूर्वदिवसस्य उत्तरार्द्धम् उत्तरदिवसस्य पूर्वार्द्धं च पुण्यम्। अतिरिक्ते—अर्द्धरात्रात् परं सक्रान्तौ परेहनि पुण्यकाल एव । "अविवेके" इति मुद्रितदेवीपुराण-पाठस्त्वशुद्धः संक्रान्तावविवेकत्वस्यासम्भवात्। अन्यत् स्पष्टम् । आदौ पुण्यमिति ग्रन्थकृता विवृतमेवेत्यलम्। सामान्यतः उभयतः षोडशदण्डाः पुण्या इत्याह जाबालिः"संक्रान्तेः पुण्यकालस्तु षोडशोभयतः कला"इति ।

---

पाठा. 1) क, ख, घ, ज, झ पाठः । 2) संक्रमणे-ख ।

"[१]कार्मुकं तु परित्यज्य [1]मृगसं[2]क्रमणे रवेः ।
प्रदोषे चार्द्धरात्रे वा [3]स्नानं दानं परेऽहनि ॥
[4]यद्यस्तमनवेलायां मकरं याति भास्करः ।
प्रदोषे चार्द्धरात्रे वा स्नानं दानं परेऽहनि ॥
अर्द्धरात्रे तदूर्ध्वं वा संक्रान्तौ दक्षिणायने ।
पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः" (वृद्धगार्ग्यः)
'मिथुनात् कर्कसंक्रान्तिर्यदि स्यादंशुमालिनः ।
प्रभाते वा निशीथे वा कुर्यादहाि पूर्वतः" ॥ (भविष्यपु.)

(एतच्च यद्यपि कल्पतरुकारेण[5] न लिखितं तथापि प्रामाणिकबहुनिबन्धकारलिखितत्वेन वैदिकदेशपरिगृहीतत्वेन च निःसन्दिग्धत्वात् एतद् विरुद्ध आचारो नादरणीयः ।

"रविसंक्रमणे पुण्ये न स्नायाद् यदि मानवः[6]) ।

---

१) कार्मुकमित्यादीनि मकरकर्कटसंक्रान्तिविषयकवचनानि कल्पतरौ न लिखितानि । कार्मुकं–धनुः, मृगो–मकरः । मकरसंक्रान्तौ श्रीजगन्नाथदेवस्य यात्रा तथा श्रीलिङ्गराजदेवस्य घृतकम्बलविधिश्च भवति । दक्षिणायनसंक्रान्तावपि श्रीजगन्नाथदेवस्य यात्रा । सर्वासु संक्रान्तिषु यस्मिन्नहोरात्रे रविः राश्यन्तरं गच्छति तद्दिने एव देवयात्रादिसमाचारः ।

ସଂକ୍ରାନ୍ତିର ପୁଣ୍ୟକାଳ

ମେଷସଂକ୍ରାନ୍ତିରେ ସୂର୍ଯ୍ୟଚଳନର ପୂର୍ବ ଦ୧୦ଣ୍ଡ ଓ ପର ଦ୧୦ଣ୍ଡ ପୁଣ୍ୟକାଳ । ବୃଷସଂକ୍ରାନ୍ତିର ପୂର୍ବ ଦ୧୬ଣ୍ଡ ଓ ପର ଦ୧୬ଣ୍ଡ ମିଥୁନସଂକ୍ରାନ୍ତିର ପର ଦ୧୬ଣ୍ଡ । କର୍କଟସଂକ୍ରାନ୍ତିର ପୂର୍ବ ଦ୩୦ଣ୍ଡ, ସିଂହସଂକ୍ରାନ୍ତିର ପୂର୍ବ ଦ୧୬ ଓ ପର ଦ୧୬ । କନ୍ୟାସଂକ୍ରାନ୍ତିର ପର ଦ୧୬ । ତୁଳାସଂକ୍ରାନ୍ତିର ପୂର୍ବ ଦ୧୦ ଓ ପର ଦ୧୦ । ବିଛାସଂକ୍ରାନ୍ତିର ପୂର୍ବ ଦ୧୬ ଓ ପର ଦ୧୬ । ଧନୁସଂକ୍ରାନ୍ତିର ପର ଦ୧୬ । ମକରସଂକ୍ରାନ୍ତିର ପର ଦ୨୦ । କୁମ୍ଭସଂକ୍ରାନ୍ତିର ପୂର୍ବ ଦ୧୬ ଓ ପର ଦ୧୬ । ମୀନସଂକ୍ରାନ୍ତିର ପରବର୍ତ୍ତୀ ଦ୧୬ ପୁଣ୍ୟକାଳ ଅଟେ । ଗ୍ରନ୍ଥକାରଙ୍କ ମତରେ ମେଷ ଓ ତୁଳାସଂକ୍ରାନ୍ତିରେ କେବଳ ପରବର୍ତ୍ତୀ ଦ୧୦ ପୁଣ୍ୟକାଳ ।

---

पाठा. 1) भ्रुष-ग,घ । 2) संक्रमते रविः– ग,घ,ङ,छ,ज,झ । 3) स्नानदाने-ग,झ । 4) श्लोकोऽयं नास्ति–क । 5) कारेण लिखितं–ख,ग,घ,छ । 6) एतच्च इत्यारभ्य मानवः" इत्यन्तः पाठो नास्ति · क ।

सप्तजन्मन्यसौ रोगी निर्द्धनश्चापि जायते ॥
[1]अयने कोटिगुणितं लक्षं विष्णुपदीफलम् ।
षडशीतिसहस्रं तु षडशीत्यां स्मृतं बुधैः" ॥ (देवीपु.)
"संक्रान्तौ यानि दत्तानि हव्यकव्यानि दातृभिः ।
तानि तेषां वहत्यर्कः पुनर्जन्मनि जन्मनि ॥
अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः ।
अहोरात्रोषितः स्नातः सर्वपापैः प्रमुच्यते ॥ (शातातपः)

इत्यत्रोपवासो गृहस्थेत[1]रविषयः ।

"[2]आदित्येऽहनि संक्रान्त्यां ग्रहणे चन्द्रसूर्ययोः ।
उपवासो न कर्त्तव्यो गृहिणा पुत्रिणा सदा" ॥

---

१) अयने इति देवीपुराणे इतिकालसारे मुद्रितदेवीपुराणे तु नास्ति ।

२) आदित्येहनीति स्मृतिमीमांसायामिति कृत्यकौमुदीकारः ।
रविसंक्रान्तियुता शुक्लसप्तमी महाजया इत्युच्यते । तदुक्तं कल्पतरौ ब्राह्मे— शुक्लपक्षे तु सप्तम्यां यदा संक्रमते रविः । महाजया तदा स्याद् वै सप्तमी भास्करप्रिया ॥ स्नानं दानं जपो होमः पितृदेवाभिपूजनम् । सर्वं कोटिगुणं प्रोक्तं तपनेन महौजसा इत्यादि (नियत ३६७)

ଦିବସଭାଗରେ ସଂକ୍ରାନ୍ତି ପଡ଼ିଲେ ଉକ୍ତ ଶାସ୍ତ୍ରରେ ନିର୍ଣ୍ଣୟ କରାଯିବ ; କିନ୍ତୁ ରାତିରେ ସଂକ୍ରାନ୍ତି ହେଲେ ଯଦି ମଧ୍ୟରାତି ପୂର୍ବରୁ ହୁଏ ତେବେ ପୂର୍ବବର୍ତ୍ତୀ ଦିନର ଉତ୍ତରାର୍ଦ୍ଧ, ଯଦି ମଧ୍ୟରାତ୍ରି ପରେ ସଂକ୍ରାନ୍ତି ହୁଏ ତେବେ ପରଦିନର ପୂର୍ବାର୍ଦ୍ଧ ପୁଣ୍ୟକାଳ । ଠିକ୍ ମଧ୍ୟରାତ୍ରିରେ ସଂକ୍ରାନ୍ତି ହେଲେ ପୂର୍ବଦିନର ଉତ୍ତରାର୍ଦ୍ଧ ଓ ପରଦିନର ପୂର୍ବାର୍ଦ୍ଧ ପୁଣ୍ୟକାଳ ହୁଏ । ଯଦି ସଂକ୍ରାନ୍ତିକାଳରେ ଯୋଗକରୁଥିବା ତିଥି ପୂର୍ବଦିନକୁ ବା ଉଭୟ ଦିନକୁ ଥାଏ ତେବେ ପୂର୍ବଦିନାର୍ଦ୍ଧ ପୁଣ୍ୟକାଳ । ଯଦି କେବଳ ପରଦିନକୁ ଥାଏ ତେବେ ପର ଦିନାର୍ଦ୍ଧ ପୁଣ୍ୟକାଳ ଅଟେ ।

ସଂକ୍ରାନ୍ତିର ପୁଣ୍ୟକାଳ ସମ୍ବନ୍ଧେ ବିଭିନ୍ନ ବଚନ ଅଛି । କିନ୍ତୁ ଯେଉଁ ସମୟ ସଂକ୍ରାନ୍ତିର ଯେତେ ନିକଟ ସେ ସେତେ ଅଧିକ ପୁଣ୍ୟକାଳ ଅଟେ । ସଂକ୍ରାନ୍ତିରେ ସ୍ନାନ ଦାନାଦି କର୍ତ୍ତବ୍ୟ କିନ୍ତୁ ପୁତ୍ରବନ୍ତ ଗୃହୀର ଉପବାସ କର୍ତ୍ତବ୍ୟ ନୁହେ ।

---

पाठा. 1) गृहस्थेतरेषां- घ, झ ।

## पृथ्वीरजस्वला

"वृषान्ते मिथुनस्यादौ [1]तन्मध्येऽपि दिनत्रयम् ।

रजस्वला स्यात् पृथिवी कृषिकर्म विगर्हितम्" ॥ (शतानन्दः)

संक्रमणदिनं तत् पूर्वोत्तरदिने इति दिनत्रयम् इत्यर्थः ।

## नदीरजस्वला

"[2]यव्यद्वयं श्रावणादि सर्वा नद्यो रजस्वलाः ।

तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः" ॥ (छन्दोगपरि.)

रजस्वला-अशुद्धाः यव्यो-मासः, समुद्रगाः- साक्षात्प्रत्यभिज्ञायमान-समुद्रप्रवेशाः । समुद्रगाशब्दो महानदीपर इति केचित् ।

महानद्यो यथा—

"भागीरथी च कालिन्दी नर्मदा च सरस्वती ।

विशोका च [1]वितस्ता च गौतमी कृष्णवेणिका ॥

तुङ्गभद्रा भीमरथी तापी चैव पयोष्णिका ।

द्वादशैते महानद्यः पाविनः पावयन्ति याः" ॥ इति

तन्न युक्तम् । समुद्रगाशब्दस्य प्रोक्षणीशब्दवत् प्रसिद्धयोगत्यागेना-प्रसिद्ध[3]रूढिकल्पनाऽयोगात् ।

"आदौ कर्कटके नद्यः सर्वा एव रजस्वलाः ।

त्रिदिनं तु चतुर्थेऽह्नि शुद्धाः स्युर्जाह्नवी यथा" ॥

संक्रान्तिदिनमारभ्य त्रिदिनमिति । तत्र गङ्गायां रजोदोषाभावात् शुद्धौ

---

१) तन्मध्ये- सूर्यसंक्रमदिवसे ।

२) यव्यद्वयमिति छन्दोगपरिशिष्टे –

३) प्रोक्षणीशब्दे यथा योगार्थत्यागेन रूढिकल्पना न क्रियते तद्वत् समुद्रगा शब्दस्य योगार्थत्यागेन रूढार्थकल्पनमयुक्तमिति भावः ।

ବୃଷମାସର ଶେଷଦିନ ମିଥୁନମାସର ଆରମ୍ଭ ଦିନ ଓ ୨ୟ ଦିନ ପୃଥ୍ୱୀ ରଜସ୍ୱଳା ହୁଏ । ତହିଁରେ କୃଷିକର୍ମ ନିଷିଦ୍ଧ ଅଟେ ।

---

पाठा. 1) विशाखी·ग ।

दृष्थान्तत्वम् । एतद् विकल्पपरमिति [1]विद्याकरवाजपेयिनः ।(महा[2]नदो-पर इत्यपरः) ।

नदीलक्षणम्—

"धनुः सहस्राण्यष्टौ च गतिर्यासां न विद्यते ।

न ता नदीशब्दवहा गर्त्तास्ताः परिकीर्त्तिताः" ॥ (छन्दोगपरि.)

"[3]चतुर्विंशाङ्गुलैर्हस्तस्तच्चतुष्कं धनुः स्मृतम् ।

उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च ।

चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते" ॥ (वसिष्ठः)

न दुष्येत्तीरवासिनामिति मदनपारिजातधृतनिगमस्मृतिः ।

"अभावे कूपवापीनामन्येनापि समुद्धृते ।

रजोदुष्टेऽपि पयसि ग्रामभोगो न दुष्यति" ॥ (व्याघ्रपादः)

अन्येना[4]पि घटादिना ।

"गङ्गा च यमुना चैव प्लक्षजाता सरस्वती ।

रजसा नाभिभूयन्ते ये चान्ये नद[1]संज्ञकाः" ॥ (देवलः)

कुरुक्षेत्रे च या सरस्वती सा प्लक्षजाता ।

---

१) नदाश्च सप्त दर्शितास्तिथितत्त्वे—

शोणः सिन्धुर्हिरण्याक्षः कोकलौहित्यघर्घराः ।

शतद्रुश्च नदाः सप्त पावना ब्रह्मणः सुता इति ॥

କର୍କଟ ସଂକ୍ରାନ୍ତିଠାରୁ ତିନିଦିନ ନଦୀମାନେ ରଜସ୍ୱଳା ହୁଅନ୍ତି । ଗଙ୍ଗା, ଯମୁନା, ସରସ୍ୱତୀ, ଶୋଣ ଓ ସିନ୍ଧୁ ପ୍ରଭୃତି ନଦୀମାନେ ରଜସ୍ୱଳା ହୁଅନ୍ତି ନାହିଁ । ନଦୀର ରଜସ୍ୱଳା ଅବସ୍ଥାରେ ମଧ୍ୟ ତୀରବାସୀ ଲୋକେ ଘଟ ପ୍ରଭୃତିରେ ପାଣି ନେଇ ବ୍ୟବହାର କରିପାରିବେ । ମତାନ୍ତରେ କର୍କଟ ଓ ସିଂହ ଦୁଇମାସ ନଦୀମାନଙ୍କର ରଜଦୋଷ ନାହିଁ ।

---

पाठा. 1) विद्याकरः-ख,घ,ङ,झ । 2)ग, घ, झ पाठः । महानदीपरमित्यपरः-ख, ज । नास्ति- क, ङ । 3) अन्येन-घटादिना-झ ।

## अगस्त्यार्घ्यः

"[1]अप्राप्ते भास्करे कन्यां स त्रिभागैस्त्रिभिर्दिनैः ।
अर्घ्यं दद्युरगस्त्याय ये[2] च सन्ति महोदये" ॥ (विष्णुरहस्यम्)

भास्करे कन्यामप्राप्ते सिंहमासे । स त्रिभागैः सिंहादित्यस्य तृतीयभाग-सहितैः । त्रिभिर्दिनैस्त्रयोदशदिनैरित्यर्थः एतत्तु महोदयस्थानाम् ।

"कन्यायामगते सूर्ये पूज्यो वै सप्तमे दिने ।
सिंहार्द्धोपगते सूर्ये कुम्भ[3]योन्यर्घ्यं इष्यते ॥
अगस्त्येनार्चितः पूर्वं ददौ तस्मै वरं हरिः ।
ये त्वां तत्रोदितं भक्त्या नार्च्चयिष्यन्ति मानवाः ॥
तेषां संवत्सरं पुण्यं मत्प्रसादात् भवेत्तव ।
वेदवेदाङ्गविद्वांसो धनधान्यप्रजान्विताः ॥
वारुण ते भविष्यन्ति लोकेऽस्मिन्नर्घ्यदास्तव" ॥

तत्र मन्त्रः—"काशपुष्पप्रतीकाश अग्निमारुतसम्भव ।
मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तु ते" ॥

(नरसिंहपु. ६८-१४) (गरुडपु १-११९-५)

## मकरसंक्रान्तौ घृतकम्बलः

"[1]आलिङ्गवेदिपर्य्यन्तं यो दद्याद् घृतकम्बलम् ।
जागरं नृत्यगीताद्यैः सकृत् कृत्वा च पर्वणि ॥

---

१) मकरसंक्रान्तौ भुवनेश्वरक्षेत्रे श्रीलिङ्गराजदेवस्य घृतकम्बलविधिर्वर्त्तते । तदुक्तं कालसारोद्धृतशिवपुराणे-"दृष्ट्वा मकरसंक्रान्त्यां लिङ्गं त्रिभुवने-

ସିଂହମାସର ଅନ୍ତିମ ଦ୧୩ନ ଅଗସ୍ତ୍ୟାର୍ଘ୍ୟ ଦାନକାଳ ଅଟେ ।

ମକରସଂକ୍ରାନ୍ତିରେ ଶିବଙ୍କୁ ଘୃତକମ୍ବଳ ଲାଗିକରିବା ବିଧେୟ । (ଶ୍ରୀଲିଙ୍ଗରାଜଙ୍କଠାରେ ଏ ଦିନ ଘୃତକମ୍ବଳ ଲାଗି ହୁଏ ଓ ଶ୍ରୀଜଗନ୍ନାଥଙ୍କର ମଧ୍ୟ ଯାତ୍ରା ହୁଏ । ଦକ୍ଷିଣାୟନ ସଂକ୍ରାନ୍ତିରେ ମଧ୍ୟ ଜଗନ୍ନାଥଙ୍କର ଯାତ୍ରା ଅଛି) ।

---

पाठा. 1) न प्राप्ते-ख,ग,घ,ङ,छ,ज । 2) ते वसन्ति- ग,घ,झ । 3) जोऽर्घ्य-क । योनेऽर्घ्यं- घ ।

मन्वन्तरसहस्राणि शिवलोके महीयते" ॥ (विष्णुधर्मोत्तरम्)

पर्वणि– मकरसंक्रान्तौ ।

## चैत्रमासकृत्यम्

"चैत्रं तु नियतो मासमेकभक्तेन यः क्षिपेत् ।

सुवर्णमणिमुक्ताढ्ये कुले महति जायते" ॥(महाभा.अनु.१०६-२३)

"कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः ।

तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणमि"ति ॥(वृद्धयाज्ञ.)

वचनात् मध्याह्नरूपैकभक्तकर्मकालव्यापिनी तिथिर्ग्राह्या ।

तत्र द्वैधे– "मासि संवत्सरे चैव तिथिद्वैधं यदा भवेत् ।

तत्रोत्तरोत्तमा ग्राह्या पूर्वा तु स्यान्मलीम्लुचः" ।

मासादितिथेः संवत्सरादितिथेश्च कर्मकालव्याप्त्या द्वैधे सति उत्तरविद्धा ग्राह्या इत्यर्थः । अतएवोभयदिने कर्मकालव्याप्तौ उत्तरदिनमारभ्य एकभक्तादिकं कार्यम् ।

यद्यपि— "दर्शान्तः पूर्णिमान्तो वा चान्द्रोऽसौ विप्रवैश्ययोः" । इति माधवाचार्यवचनात् चान्द्रमासस्य द्वैविध्यं, मासाः पौर्णमास्याद्यमावास्यादिसंक्रान्त्यादिरूपेण त्रिविधाः । तथापि "यस्मि१न् देशे यथाचारः

---

श्वरम् । घृतकम्बलसंयुक्तमग्निलोकमवाप्नुयात्" इति । अस्मिन् उत्तरायणे, दक्षिणायने च श्रीजगन्नाथदेवस्यापि यात्रोत्सवः विद्यते । तदुक्तं ब्राह्मे—"उत्तरे दक्षिणे विप्रास्त्वयने पुरुषोत्तमम् । दृष्ट्वा रामं च कृष्णां च भद्रां भद्रप्रदायिनीम् । ६३-१७ । त्यक्त्वा सर्वाणि पापानि विष्णुलोकं स गच्छति" इति । आसु सर्वासु संक्रान्तिषु यस्मिन्नहोरात्रे संक्रान्तिर्भवति तस्मिन् एव दिने श्रीजगन्नाथलिङ्गराजादिदेवानामुत्सवो भवति । नात्र पुण्यकालापेक्षा । दानहोमादौ तस्य अपेक्षितत्वात् ।

१) मनुस्मृतौ तु यस्मिन्देशे इत्यादिवचनं नास्ति । राजमार्त्तण्डे तु लोकाचारस्तावदादौ विचिन्त्यो देशे देशे या स्थितिः सैव कार्या । ४०० । इति देशाचारसमर्थकं वाक्यमस्ति ।

"इति वचनात् देश[1]स्य समाचारात् मनुव्यवस्था । अस्मद्देशे तु कृष्ण-प्रतिपदादिपौर्णमास्यन्त मास एव मासकार्यं कुर्वन्ति ।

### वैशाखमासकृत्यम्

[1]वैशाखं यः क्षिपेन्मासमेकभक्तेन मानवः ।
स याति श्रेष्ठतां लोके पूजितो धनवानपि ॥

अस्यापि पूर्ववत् व्यवस्था ।

[2]वैशाखे पुष्पलवणे वर्ज्जयित्वाथ गोप्रदः ।
भुक्त्वा विष्णुपदे कल्पं स्थित्वा राजा भवेदिह ॥ (मत्स्यपु.)

गोप्रदः मासान्त इति शेषः । पुष्पलवणवर्जनस्य निषेधरूपत्वात् "निषेधः कालमात्रक" इति वचनात् मासादितिथेर्द्वैधे पूर्वदिनमा[3]रभ्य एव

---

१) महाभारते तु- 'निस्तरेदेकभक्तेन वैशाखं यो जितेन्द्रियः ।
नरो वा यदि वा नारी ज्ञातीनां श्रेष्ठतां व्रजेत्"(अनुशा.१०६।२४)
वचनमेतत् विष्णुधर्मेऽपि (३-३२०-१५) वर्त्तते ।

२) एतत्तु मात्स्ये कान्तिव्रतत्वेन पठितम् । यथा— "वैशाखे"इत्यादिश्लोकानन्तरम्"एतत्कान्तिव्रतं नाम कान्तिकीर्त्तिफलप्रदमि"ति मत्स्यपु.१००-४५।

३) "वैशाखं सकलं मासं नित्यस्नायी जितेन्द्रियः ।
जपन् हविष्यं भुङ्क्ते यः सर्वपापैः प्रमुच्यते" । इति तथा—
"माधवं सकलं मासं तुलस्या योर्चयेन्नरः"इत्यादिसाकल्यप्रतिपादकवचनाच्च विधिपक्षेऽपि पूर्वविद्धा ग्राह्या । सूर्यास्तमनात् पूर्वं प्रतिपत्सत्त्वे व्रतारम्भ इति सारः ॥

ବୈଶାଖରେ କାମ୍ୟ ଏକଭକ୍ତ ( ହବିଷ୍ୟଭୋଜନ ) ରହନ୍ତି । ସେଥିରେ ଦୁଇଦିନ କର୍ମକାଳକୁ ଛୁଇଁ ରହିଲେ ପରଦିନ ହେବ । ସଂକ୍ରାନ୍ତ୍ୟାଦି ସୌର-ମାସ ଓ ପୂର୍ଣ୍ଣିମାନ୍ତ ଅମାବାସ୍ୟାନ୍ତ ଭେଦରେ ଦୁଇପ୍ରକାର ଚାନ୍ଦ୍ରମାସ, ଏହିପରି ତିନିପ୍ରକାର ମାସ ଶାସ୍ତ୍ରସିଦ୍ଧ ହୋଇଥିଲେ ହେଁ ଆମଦେଶରେ ପୂର୍ଣ୍ଣିମାନ୍ତ ମାସରେ କୃଷ୍ଣାଦି ମାସକାର୍ଯ୍ୟ କରିବା ପରମ୍ପରା ରହିଅଛି ।

---

पाठा. 1) देशसमाचारव्यवस्था-ख, इति मनुवचनात् देशसमाचारव्यवस्था-घ,भ । इति मनुवचनात् देश- ङ ।

कर्त्तव्यत्वम् । देवतापूजननिर्माल्यपुष्पग्रहणस्य विधिविहितत्वात् तद्-व्यतिरिक्तपुष्पग्रहणं वर्जनीयम् ।

### ज्येष्ठमासकृत्यम्

"[१]ज्येष्ठामूलं तु यो मासमेकभक्तं समाचरेत् ।
भ्रातॄणां भवति श्रेष्ठो भोगांश्चाप्नोति पुष्कलान्" ॥(महाभा.)

### आषाढमासकृत्यम्

"आषाढमेकभक्तेन स्थित्वा मासमतन्द्रितः ।
बहुधान्यो बहुधनो बहुपुत्रश्च जायते" ॥(महाभा.अनु १०६ २६)

### श्रावणमासकृत्यम्

"[२]श्रावणं नियतो मासमेकभक्तेन यः क्षिपेत् ।
यत्र तत्राभिषेकेण पूज्यते ज्ञातिवर्द्धन[1]" ॥(महाभा. अनु १०६-२७)

### भाद्रमासकृत्यम्

'[३]प्रौष्ठपदं तु यो मासमेकाहारो भवेन्नरः ।
गवाढ्यस्फीतमतुलमैश्वर्यं प्रतिपद्यते" ॥ (महाभा. १०६-२८)

एकाहारः- एकभक्ताशी[2] ।

१) महाभारते—
"ज्येष्ठामूलं तु यो मासमेकभक्तेन संक्षिपेत् ।
ऐश्वर्यमतुलं श्रेष्ठं पुमान् स्त्री वा प्रपद्यते" (अनु. १०६-२५) ॥

२) भारते पूज्यते स्थाने युज्यते इति पाठः (अनु १०६-२७)
विष्णुधर्मोत्तरेऽपि ३-३२०-१८ ।

३) महाभारते "मतुलस्थाने मचल" इति पाठः (अनु १०६-२८)
विष्णुधर्मोत्तरेपि ३-३२०-१९ ।

ସାକଲ୍ୟ ବଚନବଳରୁ ସୂର୍ଯ୍ୟାସ୍ତ ପୂର୍ବରୁ ଯଦି ବୈଶାଖ ଆରମ୍ଭ ହୁଏ ତେବେ ସେହିଦିନଠାରୁ ବୈଶାଖ ହବିଷ୍ୟାଦିକାର୍ଯ୍ୟ ଆରମ୍ଭ କରିବି । ଅନ୍ୟଥା ପରଦିନଠାରୁ ।

पाठा. 1) वर्द्धनः-ख । 2) एकभक्तः-ख ।

## आश्विनमासकृत्यम्

"[1]तथैवाश्वयुजं मासमेकभक्तेन यः क्षिपेत् ।
प्रजावान् वाहनाढ्यश्च बहुपुत्रश्च जायते" ॥ (महाभा. १०६-२६)

## कार्तिकमासकृत्यम्

"कार्त्तिकं वापि यो मासमेकभक्तेन तिष्ठति ।
सोऽश्वमेधफलं प्राप्य ब्रह्म[1]लोके महीयते ॥
[2]एकभक्तेन नक्तेन तथैवायाचितेन च ।
कृते व्रते धरावा[2]प्तिर्जायते द्वीपमालिनि" ॥ इति (नारदपु.)

केवलैकभक्तादिके फलमुक्तम् ।

"सुपुण्ये कार्त्तिके मासि देवर्षिपितृसेविते ।
क्रियमाणे व्रते नृणां स्वल्पेऽपि च[3] महत् फलम्" ॥ इति (नारदपु.)

यत् किञ्चित् व्रतमात्रे महाफलम् । केवलस्नानम् ।

"[3]यदीच्छेत् विपुलान् भोगान् चन्द्रसूर्यग्रहोपमान् ।
कार्त्तिके सकले मासि प्रातःस्नायी भवेन्नरः" ॥ (नारदपु.)

---

१) महाभारते "प्रजावान्" स्थाने "मृजावान्" इति पाठः (अनु १०६-२६)
विष्णुधर्मोत्तरे च प्रजावान् स्थाने मेधावीति पाठः ३-३२०-२० ।
"अथवाश्वयुजं मासं वर्जयेन्मांसभक्षणम् । मासषट्ककृतं पुण्यं लभेताश्वयुजान्नरः" इति कल्पतरौ नन्दिपुराणे, नियत ३६० । अत्र ज्येष्ठाद्याश्विनान्तेषु मासेषु दिनद्वये एकभक्तकाले मासादितिथिसत्त्वे उत्तरदिने एव व्रतारम्भः कार्यः "मासि संवत्सरे चैवे"ति वचनात् ।

२) उत्कलदेशे कार्त्तिके प्रायशः नक्तमेवाचर्यते ।

३) कार्त्तिकस्नानमाहात्म्यमुक्तं पाद्मे (उत्तर ९२-२३.२६)
"अद्य प्रभृति वेदास्तु मन्त्रबीजमखान्विताः ।

ଜ୍ୟେଷ୍ଠ, ଆଷାଢ଼, ଶ୍ରାବଣ, ଭଦ୍ର ଓ ଆଶ୍ୱିନମାସମାନଙ୍କର ଏକଭକ୍ତ (ଦ୍ୱିପ୍ରହର) ବ୍ରତରେ ଦୁଇଦିନର ଏକଭକ୍ତକାଳକୁ ମାସାଦି ତିଥି ଥିଲେ ପରଦିନ ବ୍ରତ ଆରମ୍ଭ କରାଯିବ ।

---

पाठा. 1) वह्निलोके-ख 2) प्राप्ति- ख, ग, घ, ङ । 3) तत्- ख ।

"कार्त्तिकस्य तु यत् स्नानं माघे मासि विशेषतः ।
कृच्छ्रादि नियमानाञ्च चान्द्रमानं प्रशस्यते" ॥ (पितामहः)
"माघकार्त्तिकयोश्चैव चान्द्रमासो विधीयते" ॥

आरब्धे स्नाने व्याध्यादिनाऽसामर्थ्ये धर्मप्रतिग्रहरूपेण पुत्रादिना दक्षिणादानपूर्वकं ब्राह्मणादिना वा स्नानं कारयेत् ।

"[2]ऊर्ज्जे यवान्नमश्नीयात् एकान्नमथवा पुनः ।
वृन्ताकं सूरणं चैव शूकशिम्बि च वर्जयेत्" ॥ (काशीखण्डे)

---

प्रत्यब्दं कार्त्तिके मासि विश्राम्यन्त्वप्सु सर्वदा ॥ २३
अद्य प्रभृत्यहमपि भवामि जलमध्यगः ।
भवन्तोपि मया सार्द्धमायान्तु समुनीश्वराः । २४
कालेस्मिन् ये प्रकुर्वन्ति प्रातःस्नानं द्विजोत्तमाः ।
ते सर्वयज्ञावभृथैः सुस्नाताः स्युर्न संशयः ॥ २५
ये कार्त्तिकव्रतं सम्यक् कुर्वन्ति मनुजाः सदा ।
ते देहान्ते त्वया शक्र प्राप्या मद्भुवनं सदा" ॥ २६ इति ॥

१)धर्मप्रतिग्रहाः धर्मकृत्ये प्रतिनिधयः, यथा निर्णयसिन्धुकालसारयोः स्कान्दे—

"भर्त्ता पुत्रः पुरोधाश्च भ्राता पत्नी सखापि वा ।
यात्रायां धर्मकार्येषु जायन्ते प्रतिहस्तकाः" ॥ इति

अथवा धर्मग्रहणाय धर्मार्थमिति यावत् "कर्त्ता दशगुणं पुण्यं लभते नात्र संशयः" इति स्कान्दोक्तेः । "असामर्थ्ये अनुकल्पस्नानं प्रतिषिद्धमाचार्यैः । तदुक्तम् "आरब्धकार्त्तिकादिस्नाने तु— व्याध्यादिना सामर्थ्याभावे पुत्रादि-प्रतिनिधिना कारयितव्यं नानुकल्पविधिना नित्यस्नान एव तद्विधानात् इति विद्याकर इति तिथितत्त्वे (पृ १४९) । मन्मते स्नानवत् व्रतमपि प्रति-निधिना कारयितव्यं न त्यक्तव्यमेव ।

२) ऊर्जे-कार्त्तिके, एकान्नम्-एकभक्तम् । वृन्ताकं बृहतीसदृशस्थूलोद्भिदः फलं वृन्तभागेन सह फलशाकत्वेन प्रसिद्धम् इति स्मृतिचन्द्रिकायाम् । श्राद्ध (पृ२१७)। वृन्ताकः वार्त्ताकीसदृशः फलविशेषः हरितः पाके रक्त इति कल्प-तरौ लक्ष्मीधरः । सूरणः-ओलुञ इति प्रसिद्धः कन्दविशेषः । शूकशिम्बि-ढङ्क इति प्रसिद्धः लताफलविशेषः ।

¹विष्णुः– "कार्त्तिकोऽग्निदैवत्योऽग्निश्च सर्व्वदेवानां मुखम् । तस्मात् कार्त्तिके मासि बहिःस्नायी गायत्रीजप्यनिरतः सकृदेव हविष्याशी संवत्सरकृतात् पापाद् विमुक्तो भवति ।

"कार्त्तिकं सकलं मासं बहिःस्नायी जितेन्द्रियः ।

जपन् हविष्यभुग् दान्तः सर्वपापैः प्रमुच्यते" ॥ (८९ अध्यायः)

सकलं कार्त्तिकमिति वचनात् मासादितिथिः पूर्वविद्धा[1] ग्राह्या । बहिःस्नायी इति विधिवचनात् प्रातःकालादन्यत्रापि दिवसे यदा कदाचिदपि स्नानम् । बहिःस्नानगायत्रीजपहविष्येतरभोजननिवृत्तिरूपं व्रतं कार्यम् । बहिः–नद्यादौ स्नानं कार्यम् । लक्षादिपरिमितगायत्रीजपकृत् । एतदसामर्थ्ये सहस्रपरिमितो बहिर्जपः प्रतिदिनं कार्यः ।

"सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः ।

महतोऽप्येनसो मासात्त्वचेवाहिर्विमुच्यते" ॥ इति (मनुः २–७९) वचनात् बहिःशब्दोऽत्र ग्रामाद् बहिरिति [2]गोविन्दराजः ।

---

१) मुद्रितविष्णुस्मृतौ तु— "मासः कार्त्तिकोऽग्निदैवत्यः । १ । अग्निश्च-सर्वदेवानां मुखम् । २ । तस्मात्तु कार्त्तिकं मासं बहिःस्नायी गायत्रीजपनिरतः सकृदेव हविष्याशी संवत्सरकृतात् पापात् पूतो भवति । ३ । कार्त्तिकं सकलं मासं नित्यस्नायी जितेन्द्रियः" इत्यादिपाठः ।

## କାର୍ତ୍ତିକବ୍ରତ

କାର୍ତ୍ତିକମାସରେ ଏକଭକ୍ତ ନକ୍ତ ଅଯାଚିତ ପ୍ରଭୃତି ବ୍ରତର ବିଧାନ ଅଛି । (ଆମଦେଶରେ ପ୍ରାୟଶଃ ନକ୍ତବ୍ରତ କରାଯାଏ) । ବିଷ୍ଣୁସ୍ମୃତିକାର କାର୍ତ୍ତିକରେ ନଦୀ ପ୍ରଭୃତିରେ ସ୍ନାନ ( ବହିଃସ୍ନାନ ) ଜପ ଓ ହବିଷ୍ୟଭୋଜନର ବିଧାନ କରିଛନ୍ତି । ରୋଗାଦିଦ୍ୱାରା ବ୍ରତପାଳନରେ ଅସମର୍ଥ ହେଲେ ଭାର୍ଯ୍ୟା ପୁତ୍ରାଦିଙ୍କ-ଦ୍ୱାରା କିମ୍ବା ଦକ୍ଷିଣାଦାନପୂର୍ବକ ବ୍ରାହ୍ମଣଦ୍ୱାରା ସ୍ନାନାଦି ବ୍ରତ ପାଳନ କରିବ, ଛାଡ଼ିବନାହିଁ ।

---

पाठा. 1) विद्धाऽपि- ख, ग, ङ । 2) जगुः- क ।

हविष्यद्रव्याणि यथा—

"हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः ।
माषकोद्रवगौरादीन् सर्वालाभेऽपि वर्जयेत्" ॥ (छन्दोगपरि.)

व्रीहिः शरत्पक्वधान्यम् । गौराः श्वेतसर्षपाः ।

"मुख्यालाभे प्रतिनिधिरपि शास्त्रार्थः" इति प्रतिनिध्यधिकरण-न्यायेन प्रतिनिधित्वेन प्राप्तान् माषकोद्रवगौरान् वर्जयेदित्यर्थः ।

"[1]हैमन्तिकं सितास्विन्नधान्यमुद्गास्तिला यवाः ।
कलायकङ्गुनीवारा वास्तुकं हिडमोचिका ॥
कालेयं कालशाकं च मूलकं केवुकेतरत् ।
कन्दं सैन्धवसामुद्रे लवणे दधिसर्पिषी ॥

---

१) हैमन्तिकं-शालिधान्यम् । सिता- शर्करा । अस्विन्नं धान्यम्-.असिद्ध-धान्यतण्डुलाः । मुद्गादयः प्रसिद्धाः । कलायः खुडिआचणा इति प्रसिद्ध इति कालसारे । कङ्गु-तृणधान्यविशेषः । नीवारादयः प्रसिद्धाः । कालेयं—तिक्तशाकविशेष इति कालसारे । जीरकं शुक्लम् । नागर- शुण्ठी । तिन्तिड़ी- तेन्तुली इति प्रसिद्धमम्लरसात्मकं फलम् । ऐक्षवपदेन इक्षुरस एव ग्राह्य इति गदाधरः । सिताया हविष्यत्वेनोक्तत्वात् "अगुड"पदेन गुडवर्जितत्वमेव प्रतीयते । नारिकेलस्य हविष्यत्वेऽपि अष्टम्यां वर्ज्यत्व-मुक्तं पाद्मे ( उ-९५ ) । क्रमात् कूष्माण्डबृहतीतरुणीमूलकं तथा । श्रीफलं च कलिङ्गं च फलं धात्रीभवं तथा । १९ । नारीकेलमलाबूं च पटोलं बदरीफलम् । चर्मवृन्ताकवल्ली च शाकं तुलसीजं तथा । २० । शाकान्येतानि वर्ज्यानि क्रमात् प्रतिपदादिषु" इत्युक्तेः । अन्यदपि वर्ज्यमुक्तं तत्रैव— "प्राण्यङ्गमामिषं चूर्णं फले जम्बीरमामिषम् । धान्ये मसूरिका प्रोक्ता ह्यन्नं पर्युषितं तथा । ८ । अजागोमहिषीक्षीरादन्य-दुग्धाद्यमामिषम् । द्विजक्रीता रसाः सर्वे लवणं भूमिजं तथा । ९ । ताम्रपात्रस्थितं गव्यं जलं पल्वलसंस्थितम् । आत्मार्थं पाचितं चान्न-मामिषं तत् स्मृतं बुधैः ९६-१० इति ।

पयोऽनुधृतसारं च पनसाम्रहरीतकी ।
पिप्पली जीरकं चैव नागरं तिन्तिडीफलम् ॥
कदलीलवलीधात्रीफलान्यगुडमैक्षवम् ।
अतैलपक्व मुनयो हविष्याणि प्रचक्षते" ॥ (भविष्यपु.)

"नारिकेलफलं चैव कदलीं लवलीं तथा ।
आम्रमामलकं चैव पनसं च हरीतकीम ॥
व्रतान्तरे प्रशस्तं च हविष्यं मनुते बुधः" इत्यगस्तिसंहिता-

वचनात्नारिकेलफलमपि हविष्यम् । हविष्ये "अस्विन्नधान्य"मिति उपादानाद[1]न्यत्र स्विन्नधान्यतण्डुलभक्षणे न दोषः ।

### [1]तत्राकाशदीपदानविधिः

"दामोदराय नभसि तुलायां लोलया सह ।
प्रदीप ते प्रयच्छामि नमोऽनन्ताय वेधसे" ॥ ब्रह्माण्डपु )

लोल[2]या-लक्ष्म्या ।

"इति मन्त्रेण यो दद्यात् प्रदीप सर्पिरादिना ।
आकाशे मण्डपे चैव स चाक्षयफल लभेत्" ॥ (ब्रह्माण्डपु.)

"तुलायां तिलतैलेन सायं सन्ध्यासमागमे ।
आकाशस्थितदीपं च यो दद्यात्तु हरिं प्रति ॥
महतीं श्रियमाप्नोति रूपसौभाग्यसपदम्" ।

---

१) हविष्यभोजनस्थलभिन्नभोजनस्थलेषु ।

ହେମନ୍ତଋତୁଧାନ୍ୟ, ମିଶ୍ରି, ଅରୁଆଚାଉଳ, ମୁଗ, ରାଶି, ଯବଧାନ, ମଟର, କାଙ୍ଗୁଲି, କାଳୁଙ୍ଗା, ବଥୁଆଶାଗ, ହିଡମୋଚ୍ଛ, କାଳଶାକ, ସୈନ୍ଧବ ଓ ସାମୁଦ୍ର ଲବଣ. ଗାଈଦହି, ଗାଈଘିଅ, ଗାଈକ୍ଷୀର, ପଣସ, ଆମ୍ବ, ହରଡା, ପିପ୍ପଳୀ, ଜିରା, ଶୁଣ୍ଠି, ତେନ୍ତୁଳିଫଳ, କଦଳୀ, ନରକୋଳ, ଅଁଳ ଫଳ, ଗୁଡଭିନ୍ନ ଆଖୁରସର ଦ୍ରବ୍ୟ (ଖଣ୍ଡ ପ୍ରଭୃତି), ତୈଳପକ୍ୱ ହୋଇ ନ ଥିବା ଦ୍ରବ୍ୟ, ଆମ୍ବ ଓ ନଡ଼ିଆ ସାଧାରଣତଃ ହବିଷ୍ୟଦ୍ରବ୍ୟ ଅଟନ୍ତି ।

---

पाठा. 1) पङ्क्तिर्नास्ति- ग,घ,ङ,भ । 2) पङ्क्तिर्नास्ति- भ ।

तुलायामिति चान्द्रकार्त्तिकमासस्याप्युपलक्षणम् ।

"आश्वयुज्यामतीतायां यावद्राका तु कार्त्तिकी ।
तावद्दीपप्रदस्योक्तं फलं राजेन्द्र शाश्वतम् ॥
तावत् कालं प्रयच्छन्ति ये तु दीपं महानिशि ।
वियद्देशे बहिस्तेषां महत् पुण्यफलं स्मृतम् ॥
अप्यन्धकारे गहने [1]प्रकाशस्तेन जायते ।
प्रकाशात् यदुशार्दूल न ते यान्ति यमालयम्" ॥ (विष्णुधर्मोत्तरपु)

"अत्यूच्चै र्दीपमाकाशे यो दद्यात् कार्त्तिके निशि ।
सप्तजन्मकृतं पापं त्रिभिर्वर्षै र्व्यपोहति ॥
विष्णुवेश्मनि यो दद्यात् कार्त्तिके मासि दीपकम् ।
अग्निष्टोमसहस्रस्य फलं प्राप्नोति मानवः[1]" ॥ (ब्रह्म पु.)

"गवामयुतदानेन यत् फलं लभते खग ।
तुलसीपत्रकैकेन तत्फलं कार्त्तिके स्मृतम् ॥
विहाय सर्वपुष्पाणि [2]मुनिपुष्पेण केशवम् ।
कार्त्तिके योऽर्च्चयेद् भक्त्या वाजिमेधफलं लभेत्" ॥ (स्कन्दपु.)

"कार्त्तिके वर्जयेत्तैलं कार्त्तिके वर्जयेन्मधु ।
कार्त्तिके वर्जयेत् कांस्यं कार्त्तिके मासि सिन्धु[3]जम्" ॥ (नारदपु.)

कार्त्तिके वर्जयेत् स्त्रियमिति चतुर्थपादः कुत्रचित् पठितः ।

"न मत्स्यं भक्षयेन्मासं न कौर्मं[2]मन्यदेव हि ।

---

१) शिवाग्रे दीपदानफलमुक्तं लिङ्गपुराणे (१/७९ अध्याये)—

"कार्त्तिके मासि यो दद्याद् घृतदीपं शिवाग्रतः ।
सम्पूज्यमानं वापश्येद् विधिना परमेश्वरम् । ३१ ।
स याति ब्रह्मणो लोकं श्रद्धया मुनिसत्तमा" इति ।

२) मुनिपुष्पम्- अगस्तिपुष्पम् ।

३) सिन्धुजं- लवणम् ।

କାର୍ତ୍ତିକମାସରେ ବିଷ୍ଣୁ ଆଳୟରେ ଓ ଶିବ ମନ୍ଦିରରେ ଦୀପଦାନ କଲେ ବିଶେଷତଃ ଆକାଶରେ ଦୀପଦାନ କଲେ ବିଶେଷ ପୁଣ୍ୟ ଲାଭ ହୁଏ ।

---

पाठा. 1) प्राकाश्यं तेन- ग, ङ, झ । 2) कौर्मं नान्यदेव- घ, ङ, झ ।

चाण्डालो जायते राजन् कार्त्तिके मांसभक्षणात्" ॥ (नारदपु.)

"[1]कौमुदं तु विशेषेण शुक्लपक्षे नराधिप ।

वर्जयेत् सर्वमांसानि धर्मो ह्यत्र विधीयते" ॥ (महाभा.)

कौमुदं- कार्त्तिकम् ।

कार्त्तिकमधिकृत्य—

"एकादश्यादिषु तथा तासु पञ्चसु रात्रिषु ।

दिने दिने च स्नातव्यं शीतलासु नदीषु च[2] ॥

वर्जितव्या तथा हिंसा मांसभक्षणमेव च" । (ब्रह्मपु.)

अतश्च मांसभक्षणे कार्तिकमासतच्छुक्लपक्षतदेकादश्यादिपञ्चदिनानि शक्ताशक्तभेदात् पापतारत[3]म्याद् वा निषिद्धानि ।

---

१) चतुर्षु वार्षिकमासेषु कार्त्तिकमासे कार्त्तिकशुक्लपक्षे वा मांसवर्जन विधेयमित्युक्तं महाभारते अनुशासनपर्वणि—

"कौमुदे तु विशेषेण शुक्लपक्षे नराधिप ।

वर्जयेन्मधुमांसानि धर्मो ह्यत्र विधीयते ॥ (११५–५४)

चतुरो वार्षिकान् मासान् यो मांसं परिवर्जयेन् ।

चत्वारि भद्राण्यवाप्नोति कीर्त्तिमायुर्यशो बलम्" ॥ (११५-५५)

तथा— "मांसं तु कौमुदं पक्षं वर्जितं पार्थ राजभिः ।

सर्वभूतात्मभूतस्थै र्विदितार्थपरावरैः ॥ (११५–५८)

गारुडेऽपि- सदा हरेर्व्रतं श्रेष्ठं ततः स्याद्दक्षिणायने ।

चातुर्मास्ये ततस्तस्मात् कार्त्तिके भीष्मपञ्चकम् ॥ (१-१२३-२)

२) "नदीष्वपि । पूजनीयो हरिर्देवो ब्राह्मणाः महुताशनाः इति । तथा— "वर्जिता प्राणिहिंसा च मासादेर्दिनपञ्चके इति पाठः ।

(कल्पतरु-नियत-४३१)

३) तिथितत्त्वकारोक्तं ग्रन्थकृद्दर्शितं पापतारतम्यं नैव कारणं मांसत्यागस्य प्रायश्चित्तरूपत्वाभावात् । अतः शक्ताशक्तभेदेन कार्त्तिकमास तच्छुक्लपक्ष- तदेकादश्यादिदिनपञ्चकेषु मांसवर्जनव्यवस्था समीचीना ।

([1]यत्तु)—"तुलामकरमेषेषु प्रातःस्नानं प्रशस्यते ।

हविष्यं ब्रह्मचर्यं च महापातकनाशनमि"ति (राजमार्त्तण्डः)

तदन्यदेव सौरमासत्रयविहितमेकव्रतमिति वाजपेयिनः ;

**भीष्मपञ्चकम्**

"भीष्मेण तद् यतः प्राप्तं व्रतं पञ्चदिनात्मकम् ।

सकाशाद् वासुदेवस्य तेनोक्तं भीष्मपञ्चकम्" ॥(विष्णुरहस्यम्)

"व्रतस्यास्य गुणान् वक्तुं कः शक्तः केशवादृते ।

व्रतं चैतन् महापुण्यं महापातकनाशनम् ॥

कार्त्तिकस्यामले पक्षे स्नात्वा सम्यग् यतव्रतः ।

एकादश्यां तु गृह्णीयाद् व्रतं पञ्चदिनात्मकम्" ।

व्रतस्वरूपं विष्णुरहस्ये भविष्योत्तरे च द्रष्टव्यम् ।

"एकादशीं समारभ्य राकां यावत् [2]प्रबोधने ।

बकोऽपि तत्र नाश्नीयान्मत्स्यं मांसं च किञ्चन" ॥ (ब्रह्मपु.)

---

१) चान्द्रमासात्पूर्वमागतां मेषसंक्रान्तिं मकरसंक्रान्तिं वाऽऽरभ्य पूर्णिमापर्यन्तं प्रातःस्नानाचरण- समाचारोप्यस्ति पाक्षिकतया । कार्त्तिके तु नास्त्येव ॥

२) प्रबोधने—हरेः निद्राभङ्गे जाते इत्यर्थः । कार्त्तिकशुक्लैकादश्यां विष्णोः प्रबोधनमिति पूर्वमुक्तमेव । तत्र प्रबोधिन्यां श्रीजगन्नाथदेवस्य यात्रा विहिता । अतएव वर्षमध्ये तस्य प्रावरण-पुष्यस्नान-मकरसंक्रान्ति-दोलायात्रा - दमनकोत्सवा - अक्षयतृतीया - स्नान - श्रीगुण्डिचा-शयन-दक्षिणायन-पार्श्वपरिवर्त्तनोत्थानरूपा द्वादशयात्रोत्सवा अत्र यथावसरं

କାର୍ତ୍ତିକରେ ତୁଳସୀ ଓ ଅଗସ୍ତି ପୁଷ୍ପରେ ବିଷ୍ଣୁଙ୍କୁ ପୂଜାକଲେ ବହୁ ପୁଣ୍ୟ ହୁଏ । କାର୍ତ୍ତିକମାସରେ ତେଲ, ମଧୁ, ଲୁଣ, ସ୍ତ୍ରୀସଙ୍ଗ ଓ ଆମିଷ ଭୋଜନ ଛାଡ଼ିବ । ମାସସାରା ମାଛମାଂସ ଛାଡ଼ି ନ ପାରିଲେ ଶୁକ୍ଳପକ୍ଷରେ, ସର୍ବାଗ୍ରେ ଏକାଦଶୀଠାରୁ ୫ ଦିନ ଅବଶ୍ୟ ଛାଡ଼ିବ ।

କାର୍ତ୍ତିକ ଶୁକ୍ଳ ଏକାଦଶୀଠାରୁ ପୂର୍ଣ୍ଣିମା ପର୍ଯ୍ୟନ୍ତ ପାଞ୍ଚଦିନ ଭୀଷ୍ମପଞ୍ଚକ ଓ ବକପଞ୍ଚକ ଅଟେ ।

---

पाठा. 1) नास्ति-क ।

कार्त्तिकपौर्णमासी यदा जपादिकालव्यापिनी तदा तत्रदिने जपादि कार्त्तिककृत्यं कार्यम् ।

"कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः ।
तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम्" ॥ इति-(वृद्धयाज्ञ) वचनात् हविष्यस्य तु हविष्येतरभोजननिवृत्तिरूपत्वात्, निषयः कालमात्रके" निषेधस्तु निवृत्त्यात्मा कालमात्रपेक्षते" इत्यादिवचनान्नक्तकाले पौर्णमास्यभावात् हविष्याकरणे न [1]व्रतहानिः ।

## चातुर्मास्यव्रतम्

"एकादश्यां तु गृह्णीयात् संक्रान्तौ कर्कटस्य वा ।
आषाढ्यां वा नरो भक्त्या चातुर्मास्योदितं व्रतम्" ॥

---

प्रदर्शिता एव । श्रीलिङ्गराजदेवस्यापि वर्षमध्ये प्रथमाष्टमी-प्रावरण-पुष्यस्नान-मकरसंक्रान्ति-माघसप्तमी-शिवरात्र्यशोकाष्टमी दमनकोत्सवाक्षयतृतीया-परशुरामाष्टमी-शयन-पवित्रारोपण यमद्वितीया-शिवोत्थापनात्मका श्चतुर्दश यात्रोत्सवा भवन्त्येव । तेषु परशुरामाष्टमी आषाढशुक्लाष्टम्याम् । शयनम् आषाढशुक्लचतुर्दश्याम् । उत्थानं कार्त्तिकशुक्लचतुर्दश्याम् । अन्ये च यथावसरंविधेयाः इति ।

१) यद्यपि एतादृशस्थले हविष्याकरणे न व्रतहानिरिति ग्रन्थकृता दर्शित कालसारकृतापि तथैवोक्तं तथापि लोकाचारगर्हितत्वात् "अस्वर्ग्यं लोक-

### ଶ୍ଳୋକର ମର୍ମ

ଯେଉଁ ବର୍ଷ କାର୍ତ୍ତିକ ମାସ ଦ୍ୱ୨୯ଦିନ ହେବ ସେ ବର୍ଷ ଏକମାସାତ୍ମକ କାର୍ତ୍ତିକ ବ୍ରତର ପୂର୍ଣ୍ଣତା ନିମନ୍ତେ ସୂର୍ଯ୍ୟାସ୍ତ ପରେ ଆସୁଥିବା କାର୍ତ୍ତିକ କୃଷ୍ଣ ପ୍ରତିପଦାକୁ ମଧ୍ୟ ବ୍ରତାଙ୍ଗରୂପେ ଗ୍ରହଣ କରି ସେହିଦିନଠାରୁ ବ୍ରତ କରିବ । ଯେଉଁବର୍ଷ କାର୍ତ୍ତିକ ପୂର୍ଣ୍ଣିମା ଉଦୟଯୁକ୍ତ ଥିବ ଓ ଆଶ୍ୱିନ ପୂର୍ଣ୍ଣିମା ସୂର୍ଯ୍ୟାସ୍ତ ପରେ ପର୍ଯ୍ୟନ୍ତ ଥିବ ସେ ବର୍ଷ ଉକ୍ତ ପୂର୍ଣ୍ଣିମା ପର ପ୍ରତିପଦାଠାରୁ ବ୍ରତାରମ୍ଭ କଲେ ବ୍ରତର ପୂର୍ଣ୍ଣତା ବାଧିତ ହେବ ନାହିଁ । ଯେଉଁବର୍ଷ କାର୍ତ୍ତିକ ମାସ ୩୧ ଦିନଆ ହେବ ସେ ବର୍ଷ ୩୧ଦିନଯାକ ବ୍ରତ କରାଯିବ ।

"आषाढशुक्लैकादश्यां पौर्णमास्यामथापि वा ।
चातुर्मास्यव्रतारम्भं कुर्यात् कर्कटसंक्रमे" ॥ (वराहपु.)
"आषाढ़स्य सिते पक्षे एकादश्यामुपोषितः ।
चातुर्मास्यव्रतं कुर्याद् यत् किञ्चिन्नि[1]यतो नरः" ॥ (महाभा.)

---

विद्विष्टं धर्म्यमप्याचरेन्न तु" (१-१५-६) इति योगीश्वरवचनात् "कार्त्तिके मासि बहिःस्नायी गायत्रीजपनिरतः सकृदेव हविष्याशी संवत्सरकृतात् पापात् विमुक्तो भवती"ति विष्णुवचनेन व्रतपक्षे स्नानजपहविष्यभोजनानां समुदितानामेव व्रतत्वकीर्त्तनात् केवलस्नानपक्षे व्रताङ्गस्नानपक्षे च "व्रतोपवासस्नानादौ घटिकैका यदा भवेत् । सा तिथिः सकला ज्ञेये"ति विष्णुधर्मोत्तरवचनेनापि सूर्योदयोत्तरवर्त्तमानायास्तिथेर्व्रताङ्गत्वेन कीर्त्तनात् व्रताङ्गहविष्यभोजनाभावेन व्रयभङ्गप्रसङ्गाच्च जपादिकालव्यापिन्यामपि कार्त्तिकपूर्णिमायां स्नानजपहविष्यभोजनदीपदानात्मकं सम्पूर्णं कार्त्तिकमासविहितं कार्त्तिकव्रतविहितं च कृत्यं विधेयमेव । हविष्यभोजनादिसकलकार्त्तिककृत्याचरणसमाचारोऽप्यस्ति । पण्डितसर्वस्वकारा अपि इत्थमेवामनन्ति "केचिद्वदन्ति तदन्तिमपौर्णमास्या द्वैधे स्नानजपयोग्यावशेषेपि हविष्यं प्रति कालाभावात् व्रतं यापनीयमिति तन्मन्दं, साकल्यवचनस्य वैयर्थ्यापत्तेरिति ।

यस्मिन् वर्षे कार्त्तिकमासस्य त्रिंशद्दिवसाः ससूर्या न भवन्ति तादृशे वर्षे प्रदोषप्रवृत्तापि कार्त्तिकादितिथिः व्रताङ्गत्वेन ग्राह्या साकल्यवचनानुरोधात् । अन्यथा त्रिंशद्दिनात्मकव्रताभावे साकल्यहानिः प्रसज्जेत । त्रिंशद्दिनात्मकत्वे हि मासे मासस्य साकल्यप्रसिद्धेः । यत्र कार्त्तिककृष्णप्रतिपत् प्रदोषव्यापिनी कार्त्तिकपूर्णिमा च जपादिकालव्यापिनी तदा प्रदोषव्यापिनी त्याज्येति पण्डितसर्वस्वकाराः । तत्र नो न विरोधः तत्र ससूर्यत्रिंशद्दिवसानामुपलब्धेः । यदि कदाचित् एकत्रिंशद्दिवसाः ससूर्या भवन्ति तदा तेषु व्रतं, साकल्यानुरोधात् । साकल्यं हि मासस्य कार्त्तिकस्य च द्वयोरपि विवक्षितम् । वस्तुतस्तु साकल्यवचनं सर्वथा क्षयपक्षे गौणतिथिग्रहणपरमित्यवगन्तव्यम् । अन्यथा साकल्यवचनानां नैरर्थक्यमापतेत ।

---

पाठा. 1) नियमेऽक ।

चातुर्मास्यव्रतासम्भवे—

"वार्षिकान् चतुरो मासान् व्रतं किञ्चित् समाचरेत् ।
असम्भवे तुलार्के तु[1] कर्त्तव्यं तत् प्रयत्नतः ॥
वार्षिकान् चतुरो मासान् केनचिद् वाहयेन्नरः ।
व्रतेन तेन नाप्नोति कल्मषं वत्सरोद्भवम्" ॥ (महाभारतम्)

## मार्गशीर्षकृत्यम्

"[1]मार्गशीर्षं तु यो मासमेकभक्तेन [2]संक्षिपेत् ।
भोजयेत्तु द्विजान् शक्त्या स मुच्येद् बहुकिल्विषैः" ॥ (महाभा.)

## पौषमासकृत्यम्

"[2]पौषमासं तु कौन्तेय एकभक्तेन यः क्षिपेत् ।
सुभगो दर्शनीयश्च [3]यशोभागी च जायते" ॥ (महाभा.)

## माघमासकृत्यम्

"[3]माघं तु नियतो मासमेकभक्तेन यः क्षिपेत् ।
श्रीमत्कुले ज्ञातिमांश्च सुमहांश्चैव जायते" ॥ (महाभा.)

---

१) मुद्रित महाभारते "स मुच्येद् व्याधिकिल्विषैः" इति अन्तिमपादपाठः । (अनु १०६-१७) । विष्णुधर्मोत्तरे च द्वितीयार्द्धे "कृषिभागी बहुधनो धान्यवानभिजायते" इति विशेषः ३-३२०-२२ ।

२) तत्र "एकभक्तेन" इति स्थाने "भक्तेनैकेन" इति पाठः (अनु १०६-२०) विष्णुधर्मोत्तरे तु कौन्तेय स्थाने विप्रेन्द्रा इति पाठः (३-३२०-२३) ।

३) "श्रीमत् कुले-ज्ञातिमध्ये स महत्त्वं प्रपद्यते" इत्युत्तरार्द्धपाठः । (महाभा. अनु॰१०६-२१) ।

ଆଷାଢ ଶୁକ୍ଳ ଏକାଦଶୀ, ଆଷାଢ଼ ପୂର୍ଣ୍ଣିମା କିମ୍ବା କର୍କଟ ସଂକ୍ରାନ୍ତିରୁ ଚାତୁର୍ମାସ୍ୟ ବ୍ରତ ଆରମ୍ଭ କରିବ । ଅସମ୍ଭବପକ୍ଷେ କେବଳ ତୁଳାମାସରେ କରିବ ।

ମାର୍ଗଶିର, ପୌଷ, ମାଘ, ଫାଲ୍‌ଗୁନ ଓ ଚୈତ୍ରମାସର ଏକଭକ୍ତ ବ୍ରତଷ୍ୟ-ଭୋଜନ ଜ୍ୟେଷ୍ଠମାସ ପ୍ରଭୃତିର ନ୍ୟାୟ ପ୍ରଯୁଜ୍ୟ ହେବ ।

---

पाठा. 1) च कर्त्त-ग,घ,ङ,झ । 2) यः क्षिपेत्-ग,घ । मेकभक्तं नरः क्षिपेत्-ङ,झ ।
3) सुसौभाग्यश्च जायते- झ ।

"दर्शं वा पौर्णमासं वा प्रारभ्य स्नानमाचरेत् ।
पुण्यान्यहानि त्रिंशत्तु मकरस्थे दिवाकरे" ॥ (विष्णुः)

दर्शः पौर्णमासीति पूर्वदिनसंकल्पपरमिति नारायणोपाध्यायाः ।

"आयुरारोग्यसम्पत्तौ रूपे सुभगता गुणे ।
येषां मनोरथास्तैस्तु न त्याज्यं माघमज्जनम्" ॥
"[2]दारिद्र्यपापदौर्भाग्यपङ्कप्रक्षालनाय वै ।
माघस्नानान्न चान्योऽस्ति उपायो नरसत्तम ॥ (पद्म)
अविमुक्ते प्रयागे च गङ्गासागरसंगमे ।
यत्फलं दशभिर्वर्षैः [1]प्राप्यते नियतैर्नरैः ॥
तत्फलं लभते माघे गृहस्नानान्न संशयः ।
ब्रह्महा हेमहारी च सुरापो गुरुतल्पगः ॥
माघस्नायी विपापः स्यात्तत्संसर्गात् पञ्चमः ।
आयुर्वित्तकलत्रादिसम्पदः प्रभवन्ति च ॥
[2]उपपातकसर्वाणि पातकानि महान्ति च ।
भस्मीभवन्ति सर्वाणि माघस्नायिनि मानवे ॥

---

१) एकभक्तकाले प्रतिपल्लाभे व्रताचरणस्य विहितत्वात् तत्पूर्वं स्नानकाले प्रतिपदभावेऽपि प्रतिपदर्थं स्नातव्यम् । तदन्यथा साकल्यबाधापत्तेः । एतेनास्य "अभावेऽपि प्रतिपदः संकल्पः प्रातरिष्यते इतिवचनेन सह एकवाक्यता सिद्ध्यति । कर्मकालव्याप्त्या हि तिथेः पारिभाषिकी पूर्णता स्वीक्रियते । तत्रैव साकल्यवचनानामुपयोगः । दर्शारम्भः दर्शान्तमासावलम्बिनाम् ।

२) अविमुक्तं-वाराणसी । तदुक्तं स्कान्दे काशीखण्डे (२६/२३) ।
"मुने प्रलयकालेऽपि न तत् क्षेत्रं कदाचन ।
विमुक्तं हि शिवाभ्यां यदविमुक्तं ततो विदु"रिति ॥

---

पाठा. 1) प्राप्नोति नियतो नरः-क । अविमुक्त इत्यारभ्य.........पञ्चम इत्यन्तपाठो नास्ति-ङ । 2) उपपातकानि सर्वाणि-ग, ङ, झ ।

[1]कामादिकं च यत् पाप ज्ञानाज्ञानकृतं च यत् ।
स्नानमात्रेण नश्येत्तु मकरस्थे दिवाकरे" ॥
सरितामप्यभावे तु नवकुम्भस्थितं जलम् ।
वायुना ताडितं रात्रौ गङ्गास्नानसमं विदुः" ॥
"बाला[2]स्तरुणका वृद्धा नरो नारी नपुंसकाः ।
स्नात्वा माघ शुभे तीर्थे प्राप्नुवन्तीप्सितं फलम् ॥
ब्रह्मक्षत्रविशांचैव मन्त्रवत् स्नानमिष्यते ।
तूष्णीमेव हि शूद्रस्य स्त्रीणां कुरुकु[3]लोद्भव" ॥ (भविष्यपु.)
"[1]सितासितेषु यैः स्नातं माघमासे युधिष्ठिर ।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि" ॥ (महाभा.)
"[2]षष्टितीर्थसहस्राणि षष्टितीर्थशतानि च ।
माघमासे गमिष्यन्ति गङ्गायमुनसगमे" ॥ (मत्स्यपु.)
"गवां शतसहस्रस्य सम्यग् दातुश्च यत् फलम्" ॥
"[3]मकरस्थे रवौ माघे प्रातःकाले तथाऽमले ।
गोष्पदेऽपि जले स्नानं स्वर्गदं पापिनामपि" ॥ (पद्मपु.)

---

१) सितासितेषु–गङ्गायमुनासंगमेषु ।

२) कौर्मेऽपि (३८–५)

महाभारते च—

"दशतीर्थसहस्राणि तिस्रः कोट्यस्तथापराः ।
समागच्छन्ति माघ्यां तु प्रयागे भरतर्षभ" ।। (अनु २५–३६–३७)

"माघमासं प्रयागे तु नियतः संशितव्रतः । स्नात्वा तु भरतश्रेष्ठ निर्मलः स्वर्गमाप्नुयात्" ३७/३८ ।

३) प्रकाशितपद्मपुराणे तु—

"कालोऽप्येष महापुण्यः फलदोऽस्तु सदा नृणाम् ।
सूर्ये मकरगे प्रातःस्नायिनां पापनाशनः ॥ ९३-२२

---

पाठा. 1) कामात्कृतं-भ । 2) बाला वा तरुणा-भ । 3) कुलोद्वह-ग, घ ।

ततः[1] प्रातःकालेऽत्र स्नानम्-अतएव—

"यो माघमास्युषसि सूर्यकराभिताम्रे,
स्नानं समाचरति चारुनदीप्रवाहे ।
उद्धृत्य सप्तपुरुषान् पितृमातृवंश्यान्
[2]स्वर्गं प्रयात्यमरदेहधरो नरोऽसौ" ॥ (भविष्योत्तरम्)

इत्यत्र उषसीत्यभिधानात् सूर्यकराभिताम्रे इत्युक्तम्, सूर्योदयात् प्रागपि तत्करसम्भवात् । न तु सूर्याभिताम्र इत्युक्तम् ।

यत्तु— "माघे मासि रटन्त्यापः किञ्चिदभ्युदिते रवौ ।
ब्रह्मघ्नमपि चाण्डालं कं पतन्तं पुनीमहे ॥
किञ्चिदभ्युदिते सूर्ये माघस्नानं समाचरेत्" । (भविष्योत्तरपु.)

इत्यत्र किञ्चिदभ्युदिते रवावित्युक्तं तत् प्रातःकालोत्तरावधि[1]रूपम् ।

"सम्प्राप्ते मकरादित्ये पुण्ये पुण्यप्रदे सदा ।
कर्त्तव्यो नियमः कश्चिद् व्रतरूपी नरोत्तमैः" ॥ (स्कन्दपु)
"हरेरर्च्चा तु वैशाखे तपः पूजा तु कार्त्तिके ।
[2]तपोऽभ्यर्च्चा तथा दानं त्रयं माघे विशिष्यते" ॥ (पद्मपु.)

## फाल्गुनमासकृत्यम्

"एकभक्तं तु कुर्वाणः फाल्गुने मासि नित्यशः ।

---

मकरस्थे रवौ माघे प्रातःस्नानं प्रकुर्वताम् ।
दर्शनादेव पापानि यान्ति सूर्याद् यथा तमः ।। ९३-२३
सलोकत्वं समीपत्वं सरूपत्वं त्रयं क्रमात् । नृणां दास्याम्यहं स्नानैर्माघे मकरगे रवौ ।। पद्म, उत्तर, ६३-२४

१) माघस्थाने प्रातःकालः स्नानकालस्य चरमावधिरिति भावः ।
२) तपश्चात्र स्नानजपहविष्यभोजनादि ।

ମାଘମାସରେ ପ୍ରାତଃ ସୂର୍ଯ୍ୟୋଦୟ ପୂର୍ବରୁ ସ୍ନାନକଲେ ବହୁ ପୁଣ୍ୟ ହୁଏ । ଗଙ୍ଗା ଯମୁନା ସଂଗମରେ ସ୍ନାନକଲେ ଅତି ଅଧିକ ପୁଣ୍ୟ ମିଳେ । ନାରାୟଣ ଉପାଧ୍ୟାୟ କହନ୍ତି ଯେ ବ୍ରତାରମ୍ଭର ପୂର୍ବଦିନ ସଂକଳ୍ପ କରିବ ।

---

पाठा. 1) अतः—ग,घ । ततः......स्नानम् इति नास्ति—भ । 2) प्रेत्य—क ।

स्त्रीषु सौभाग्यमाप्नोति स्त्रियश्च परमप्रियाः" ॥

## माघफाल्गुनस्नानम्

"[1]य इच्छेत् विपुलान् भोगान् चन्द्रसूर्यग्रहोपमान् ।
प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ' ॥ विष्णुस्मृतिः९०-२९)

"प्रातः [2]स्नायाच्च सततं द्वौ मासौ माघफाल्गुनौ ।
देवान् पितॄन् समभ्यर्च्य सर्वपापैः प्रमुच्यते" ॥ (यमः)

देवपितृसमर्चनं- तर्पणादिना ।

## मलमासव्यवस्था

"[1]सौरेणाब्दस्तु मानेन यदा भवति भार्गव । (१९)
सावनेऽपि तदा माने दिनषट्कं न पूर्यते ॥
दिनरात्र्यश्च ते राम प्रोक्ताः संवत्सरेण षट् । (२०)
सौरसंवत्सरस्यान्ते मानेन शशिजेन तु ॥
एकादशातिरिच्यन्ते दिनानि भृगुनन्दन ॥ (२१)
[3]वर्षद्वये साष्टमासे तस्मान्मासोऽतिरिच्यते ।
स चाधिमासकः प्रोक्तः काम्यकर्मसु गर्हितः" ॥ इति
(विष्णुधर्मो.पू. १-७२-२२)

सौरसंवत्सरः षड्भिर्दिनैः सावनादतिरिच्यते । एकादशभिर्दिनैश्चान्द्रादतिरिच्यते ।

---

१) सूर्यस्य मेषादिद्वादशराशिभ्रमणावच्छिन्नः कालः सौराब्दः । षष्ट्यधिकशतत्रयाहोरात्रात्मकः सावनाब्दः । चैत्रशुक्लप्रतिपदादिफाल्गुनदर्शान्तश्चान्द्राब्दः । तेषु सौरः सावनमानेन सपादपञ्चषष्ट्युत्तरत्रिशत(३६५/१५दण्डाः) दिनात्मकः । चान्द्रः चतुःपञ्चाशदधिकशतत्रय-सावनाहोरात्रात्मकः । तेन सौरः चान्द्रात् प्रायः एकादशभिरहोरात्रैरतिरिच्यते इति सारः ।

ମାଘ ଓ ଫାଲ୍ଗୁନ ଦୁଇମାସରେ ପ୍ରାତଃସ୍ନାନ କଲେ ଲୋକ ପାପମୁକ୍ତ ହୁଏ ।

---

पाठा. 1) यदाच्छेत्- घ,क. मुद्रित विष्णुस्मृतौ अपि । 2) स्नायी च-ग ।
3) समाद्वये- ङ, भ ।

"इन्द्राग्नी यत्र हूयेते मासादिः सः प्रकीर्त्तितः ।
अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृषोमकौ ॥
तमतिक्रम्य तु यदा रविगच्छेत् कदाचन ।
आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्राकृतः स्मृतः" ॥ (लघुहारीतः)

तत्रैवं सति शुक्लप्रतिपदादिदर्शान्तो मासः संक्रान्तिरहितः अधिमासः इत्यर्थादापद्यते ।

"यस्मिन् मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा ।
मलमासः स विज्ञेयो मासे[1] त्रिंशत्तमे भवेत् ॥ (काठकगृह्यः)
[2]षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः ।
पूर्वार्द्धं तु परित्यज्य कर्त्तव्या उत्तरे क्रिया: ॥ (ज्योतिःपितामहः)

---

१) "त्रिंशत्तमे मासे" इति प्रायिकम् । "वर्षद्वये साष्टमासे" इति विष्णुधर्मोत्तरवचनमपि तथैव" कदाचित् तस्मादधः कदाचित्तदुपरि च मलमासागमस्य दर्शनात् । तथाहि १८८२ शकाब्दे आषाढोऽधिकः । ततःपरं १८८५ शकाब्दे चतुस्त्रिंशत्तमः वैशाखमासोऽधिकः । ततःपरं १८७१ शकाब्दे अष्टाविंशतितमः भाद्रो मासोऽधिकः । अनयारीत्या माससंख्यायां व्यभिचारदर्शनात् संक्रान्तिरहितो दर्शान्तमासोधिमास इति सिद्धम् ।

२) "षष्ट्या तु दिवसै"रिति वाक्येन मासस्य षष्टिदिनात्मकत्वे सिद्धे अधिमासस्य शुद्धमासाङ्गता, न तु स्वतन्त्रमासता । तेन मलवैशाख,

ମଳମାସ

ସାବନ ବର୍ଷର ପରିମାଣ ୩୬୦ଦନ । ସୌରବର୍ଷ ତାହାଠାରୁ ସ୍ଥୂଳତଃ ଦ୬ନ(ଠିକ୍ ଦ୫।୧୫।୩୧)ଅଧିକ ଅଟେ । ଚାନ୍ଦ୍ରବର୍ଷ ସୌରବର୍ଷଠାରୁ ଦ୧୧ଦ ନ୍ୟୂନ ଅଟେ । ଏଣୁ ଦୁଇବର୍ଷ ଆଠମାସରେ ଏକ ଚାନ୍ଦ୍ରମାସ ଅଧିକ ହୁଏ । ଏହାର ନାମ ଅଧିମାସ । ଏ କାମ୍ୟକର୍ମ ନିମନ୍ତେ ଗର୍ହିତ ଅଟେ । ଯେତେବେଳେ ଗୋଟିଏ ଅମାବାସ୍ୟାନ୍ତ ମାସରେ ସୂର୍ଯ୍ୟସଂକ୍ରାନ୍ତି ନ ପଡ଼େ, ସେହି ଅସଂକ୍ରାନ୍ତ ମାସଟିକୁ ଅଧିମାସ ରୂପେ ଗ୍ରହଣ କରାଯାଏ । ମଳମାସ ଦ୩୦ଦ ଓ ଶୁଦ୍ଧମାସ ଦ୩୦ଦ ଏପରି ଦ୬୦ରେ ଗୋଟିଏ ମାସ ହୁଏ ।

ଉକ୍ତ ଅଧିମାସ ପ୍ରାୟଶଃ ୩୦ ମାସରେ ଥରେ ଆସେ । ଦର୍ଶାନ୍ତ ଚାନ୍ଦ୍ରମାସ ପକ୍ଷରେ ଏହା ପରବର୍ତ୍ତୀ ଦର୍ଶାନ୍ତମାସର ଅଙ୍ଗ ହୁଏ, କିନ୍ତୁ ପୂର୍ଣ୍ଣିମାନ୍ତମାସ

असंक्रान्तमासोऽधिमासः स्फुटः स्याद्—

द्विसंक्रान्तिमासः क्षयाख्यः कदाचित् ।

---

मलज्येष्ठ इत्यादिनाम्ना शुद्धवैशाखादिमासाङ्गत्वेन च तस्य व्यवहारः । तत्र "कर्त्तव्या उत्तरे क्रियाः" इति दर्शान्तमासपक्षमाश्रित्योक्तम् । पूर्णिमान्तमासपक्षे तु शुद्धस्य वैशाखादिमासस्य मध्यभागे एव अधिमास आगच्छति । तेनात्र मलमासस्य शुद्धमासगर्भगत्वं सिद्ध्यति न चोत्तरमासपुच्छभूतत्वम् । ननु यथा दर्शान्तमासपक्षे "पूर्वार्द्धं तु परित्यज्य कर्त्तव्या उत्तरे क्रिया इत्यादिवचनम् अधिमासस्य उत्तरमासाङ्गत्वे नियामकं, तथा पूर्णिमान्तमासस्य मलगर्भकत्वे किमपि प्रमाणमस्ति वा ? उच्यते- "मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चान्द्रः ।
चैत्राद्यः स स विज्ञेयः पूर्त्तिद्वित्वेऽधिमासोऽन्त्यः ॥ इति
अनेन चान्द्रसौरमासयोः सम्बन्धनिरूपकवचनेन सौरमेषमासे यस्य चान्द्रस्य दर्शपूर्त्तिर्भवति स दर्शान्तश्चैत्रो मासः । पूर्णिमान्तमासपक्षे स एव दर्शः वैशाखदर्श इति व्यवह्रियते । अतएव मेषस्थे रवौ यस्य पक्षस्य दर्शपूर्त्तिर्भवति स एव पक्षः वैशाखकृष्णपक्ष इति सिद्ध्यति । तदुत्तर भावी शुक्लपक्ष एव वैशाखशुक्लपक्ष इति उभयमतेनापि स्वीक्रियते । तेन यस्मिन् मेषमासे द्वयोर्दर्शयोः पूर्त्तिर्भवति तत्र प्रथमदर्शस्य यथा वैशाखदर्शसंज्ञा तथैव तदुत्तरदर्शस्यापि वैशाखदर्शसंज्ञकता युज्यते एव । तदुत्तरभाविनः शुक्लपक्षस्य वैशाखशुक्लपक्षत्वेनाभिधानम् उभयथापि न विरुद्धम् । अतएव पूर्णिमान्तमासपक्षे मलमासस्य शुद्धमासगर्भगत्वं सिद्ध्यति । तेन तत्पक्षे मलशुक्लपक्षस्य उत्तरभाविनि शुद्धशुक्लपक्षे, मलकृष्णपक्षस्य तत्पूर्ववर्त्तिनि शुद्धकृष्णपक्षे अन्तर्भावः सिद्धः ।

ପକ୍ଷରେ ଶୁଦ୍ଧମାସର ଗର୍ଭଗତ ହୁଏ । ଯଥା ପ୍ରଥମ ବୈଶାଖଶୁକ୍ଳପକ୍ଷ ତାପରେ ମଳବୈଶାଖମାସ ଓ ତାପରେ ବୈଶାଖ ଶୁକ୍ଳପକ୍ଷ । ଏଣୁ ଏଠାରେ ସେ ମାସର ମଳଶୁକ୍ଳପକ୍ଷ ପରବର୍ତ୍ତୀ ଶୁଦ୍ଧଶୁକ୍ଳପକ୍ଷରେ ଓ ମଳକୃଷ୍ଣପକ୍ଷ ତତ୍ପୂର୍ବବର୍ତ୍ତୀ ଶୁଦ୍ଧକୃଷ୍ଣପକ୍ଷରେ ଅନ୍ତର୍ଭୁକ୍ତ ହୁଏ ।

[1]क्षयः कार्त्तिकादित्रये नान्यदा स्यात् ।
तदा वर्षमध्येऽधिमासद्वयं स्यात् ॥
(सिद्धान्तशिरोमणिः, अधिमास ६)

ननु द्वयोरसंक्रान्तयोः परित्यागे ससंक्रान्ता एकादशैव मासाः । ततो "द्वादश[1] मासाः संवत्सर" इति नित्य[2]वच्छ्रुतिविरोध इति चेत् द्विसंक्रान्तियुक्तस्य क्षयमासस्य मासद्वयत्वेन परिगणनात् द्वाद[3]श-मासत्वम् । यथा—

---

१) द्विसंक्रान्तियुक्त एको दर्शान्तश्चान्द्रमासः क्षयमास इत्युच्यते । स च क्षयमासः कार्त्तिकादिमासत्रये आगच्छति, नान्यदा । तदानीं रविगतेः क्षिप्रत्वात् । तत्र क्षयमासात् पूर्वभाविनि मासत्रये एकोधिमासः उत्तर-भाविनि मासत्रये चैकः अधिमास इति एकस्मिन्नपि वर्षे अधिमासद्वय-

ଗୋଟିଏ ଦର୍ଶାନ୍ତ ଚାନ୍ଦ୍ରମାସ ମଧ୍ୟରେ ଦୁଇଗୋଟି ସୂର୍ଯ୍ୟସଂକ୍ରାନ୍ତି ହେଲେ କ୍ଷୟମାସ ହୁଏ । ଏହି କ୍ଷୟମାସ କାର୍ତ୍ତିକ ମାର୍ଗଶିର ଓ ପୌଷମାସ ମଧ୍ୟରେ ହିଁ ଆସେ । (ଯେଣୁ ସେ ସମୟରେ ରବିଗତି କ୍ଷିପ୍ର ଥାଏ) ଅନ୍ୟ ମାସରେ ଆସେନାହିଁ । ( କ୍ଷୟମାସ ୧୪୧ ବର୍ଷରେ କିମ୍ବା ୧୨୨ ବର୍ଷରେ କିମ୍ବା ୧୯ ବର୍ଷରେ ଆସେ) । ଯେଉଁ ବର୍ଷ କ୍ଷୟମାସ ପଡ଼େ ସେ ବର୍ଷ କ୍ଷୟମାସର ପୂର୍ବ ତିନମାସ ମଧ୍ୟରେ ଗୋଟିଏ ଅସଂକ୍ରାନ୍ତ ମାସ ବା ଅଧିମାସ ପଡ଼େ ଓ କ୍ଷୟ-ମାସର ପରବର୍ତ୍ତୀ ତିନମାସ ମଧ୍ୟରେ ଆଉ ଗୋଟିଏ ଅଧିମାସ ପଡ଼େ । (ଯଥା ୧୮୭୫ ଶକାବ୍ଦରେ ମାର୍ଗଶିର ଅମାବାସ୍ୟାର ପରବର୍ତ୍ତୀ ଶୁକ୍ଳପ୍ରତିପଦାରେ ଧନୁସଂକ୍ରାନ୍ତି ଓ ସେ ମାସର ଅମାବାସ୍ୟାରେ ମକରସଂକ୍ରାନ୍ତି ହୋଇଥିଲା । ମାସନିର୍ଣ୍ଣୟ ଅନୁସାରେ ସେ ମାସର ଅମାବାସ୍ୟା ମକରରେ ହେଉଥିବାରୁ ସେ ମାସକୁ ଦର୍ଶାନ୍ତ ପୌଷ କୁହାଗଲା ଓ ତା ପୂର୍ବରୁ ଦର୍ଶାନ୍ତ ମାର୍ଗଶିର ଅର୍ଥାତ୍ ମାର୍ଗଶିରଶୁକ୍ଳପକ୍ଷ ଓ ପୌଷକୃଷ୍ଣପକ୍ଷ ଲୁପ୍ତ ହେଲା । ଏଣୁ ସେ ଦ୍ୱିସଂକ୍ରାନ୍ତ-ମାସର ନାମ କ୍ଷୟମାସ । ଏହି ମାସ ଗୋଟିଏ ଚାନ୍ଦ୍ରମାସକୁ ଗ୍ରାସ କରୁଥିବାରୁ ଅଂହସ୍ପତି (ପାପପତି) ବୋଲି ଆଉଗୋଟିଏ ନାମ ମଧ୍ୟ ତାର ରହିଅଛି ।

---

पाठा. 1) द्वादशमासाः संवत्सर इति पाठो नास्ति ग,झ । 2) नित्यवक्तु-विरोधः-क । 3) त्रयोदशमासत्वं-झ ।

"¹तिथ्यर्द्धे प्रथमे पूर्वो द्वितीयेऽर्द्धे तदुत्तरः।
मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगौ" ॥ (स्मृतिः)

मागच्छति । तथाहि १८८५ पञ्चाशीत्यधिकाष्टादशपरिमिते शकसंवत्सरे एतादृश एको द्विसंक्रान्तमास आगतः। तस्मिन् वर्षे दर्शान्त- कार्त्तिक-मासस्य दर्शानन्तरभाविन्यां शुक्लप्रतिपदि धनुःसंक्रान्तिः । ततः परं तदुत्तरदर्शे मकरसंक्रान्तिश्चाभूत् । तेन तस्य मासस्य द्विसंक्रान्तत्वं जातम् । तत्र मकरस्थे रवौ द्वितीयदर्शस्य पूर्त्तिर्जाता । ततः "मेषादिस्थे सवितरी"त्यादिवचनेन तस्यैव मासस्य दर्शान्तपौषमासत्वं जातम् । ततः पूर्वं च दर्शान्तकार्त्तिकमासः समाप्तः । तयोर्मध्ये दर्शान्तो मार्गशीर्ष-मासः, पूर्णिमान्तमासपक्षे मार्गशिरमासस्य शुक्लपक्षः पौषमासस्य कृष्णपक्षश्चेति द्वौपक्षौ क्षीणौ । तेन तस्य मासस्य क्षयमाससंज्ञा । स च क्षयमासः "कुवेदेन्दुवर्षैः क्वचिद् गोकुभिश्च" अर्थात् एकचत्वारिंशदधिक-शततमे १४१ वर्षे, कदाचित् १२२ द्वाविंशत्यधिकशततमे वर्षे कदाचित् १९ एकोनविंशे वर्षे आगच्छति । एकमासग्रासित्वात् तस्य अंहस्पति-संज्ञाऽपि ।

१) यस्मात् द्विसंक्रान्तमासः मासद्वयात्मकमासो भवति तस्मात् तस्मिन् मासे मासद्वयस्य पितृकार्यं देवकार्य च विधेयम् । यथा अतीते मार्गशिरक्षयस्थले तन्मासस्य शुक्लप्रतिपदि पार्वणश्राद्धोपयोगिन्यां मार्गशिरशुक्लप्रतिपदि-मृतस्य पौषशुक्लप्रतिपदिमृतस्य च पार्वणश्राद्धं विधेयमित्युपदिष्टम् । तथा चान्यासु तिथिषु ।

एव तस्य क्षयमासस्य कृष्णपक्षे पार्वणश्राद्धोपयोगिन्यां तिथौ पूर्णिमान्तमासानुसारं पौषकृष्णपक्षे मृतानां माघकृष्णपक्षे च मृतानां श्राद्धं विहितम् ।

तथैव तस्य क्षयमासस्य प्रतिपदादितिथेः भोगकालं द्विधा विभज्य प्रथमार्द्धे मृतानां जातानां च श्राद्धस्वनक्षत्रे उत्तरवर्षेषु प्रथममासे, उत्तरार्द्धे मृतानां जातानां च श्राद्धस्वनक्षत्रे द्वितीये मासि विधेयम् । तथैवातीतक्षयमासे दर्शान्तमार्गशिरपौषयोः कृते व्यवस्थापितमस्माभिः "तिथ्यर्द्धे प्रथमे पूर्वो द्वितीयेऽर्द्धे तदुत्तर इति वचनात् । विशेषस्तु मत्कृतक्षयमासव्यवस्थातः अवगन्तव्यः ।

"चान्द्रोऽधिमासोऽसंक्रान्तः सोऽन्तर्भवपि चोत्तरे ।
असंक्रान्तावेकवर्षे द्वौ चेत् संसर्प आदिमः ।
क्षयमासो द्विसंक्रान्तः स चांहस्पतिसंज्ञकः" ॥ (माधवः)

## [1]तत्र करणाकरणविचारः

"अयस्त्याज्या विवाहादौ संसर्पांहस्पती उभौ ।
शुद्धौ श्रौते तथा स्मार्त्ते मल[1]मासो विविच्यते ॥
काम्यारम्भं तत्समाप्तिं मलमासे विवर्जयेत् ।

---

१) मलमासः- अत्र द्वितीयः अधिमास एव ।

ଉକ୍ତ କ୍ଷୟମାସଟିକୁ ଦୁଇଟି ଚାନ୍ଦ୍ରମାସରୂପେ ଗ୍ରହଣକରିବାକୁ ହେବ । ସେ ମାସରେ ତିଥିମାନଙ୍କର ପ୍ରଥମ ଅର୍ଦ୍ଧଟି ପ୍ରଥମମାସର ତିଥି ଓ ଦ୍ୱିତୀୟ ଅର୍ଦ୍ଧଟିକୁ ଦ୍ୱିତୀୟମାସର ତିଥି ବୋଲି ବୁଝିବାକୁ ହେବ । ତେଣୁ ଯେଉଁଦିନ ତିଥି ଶ୍ରାଦ୍ଧକାଳକୁ ଥିବ ସେହିଦିନହିଁ ଦୁଇମାସର ଉକ୍ତତିଥିବିହିତ ଶ୍ରାଦ୍ଧ କରିବାକୁ ହେବ । ସେହିପରି ଯେଉଁଦିନ ଦେବକାର୍ଯ୍ୟର ଉପଯୋଗୀ ତିଥି ରହିଥିବ ସେହିଦିନ ଦୁଇମାସର ବିହିତ ଦେବକାର୍ଯ୍ୟ କରାଯିବ । ଯଥା- ଯଦି ମାର୍ଗଶିର- ମାସ କ୍ଷୟ ହୁଏ ତେବେ ସେହି କ୍ଷୟ ମାସର ଆରମ୍ଭ ତିଥି ଶୁକ୍ଳପ୍ରତିପଦା, ଯେଉଁଦିନ ପାର୍ବଣଶ୍ରାଦ୍ଧକାଳକୁ ଥିବ ସେହିଦିନହିଁ ମାର୍ଗଶିର ଶୁକ୍ଳପ୍ରତିପଦାରେ ମୃତବ୍ୟକ୍ତି ଓ ପୌଷଶୁକ୍ଳପ୍ରତିପଦାରେ ମୃତବ୍ୟକ୍ତିମାନଙ୍କର ପାର୍ବଣଶ୍ରାଦ୍ଧ କରାଯିବ ।

ଉକ୍ତ ତିଥି ଯେଉଁଦିନ ଏକୋଦ୍ଦିଷ୍ଟକାଳବ୍ୟାପିନୀ ହୋଇଥିବ ସେହିଦିନହିଁ ଉକ୍ତ ଦୁଇମାସର ଶୁକ୍ଳପ୍ରତିପଦାରେ ମୃତବ୍ୟକ୍ତିମାନଙ୍କର ଏକୋଦ୍ଦିଷ୍ଟ ବିହିତ ଶ୍ରାଦ୍ଧ କରାଯିବ ।

ଆଗାମିବର୍ଷମାନଙ୍କ ନିମନ୍ତେ ଉକ୍ତ ଶୁକ୍ଳପ୍ରତିପଦାର ଭୋଗକାଳ ମଧ୍ୟରୁ ପ୍ରଥମଅର୍ଦ୍ଧରେ ମୃତ ବା ଜାତ ବ୍ୟକ୍ତିମାନଙ୍କର ଶ୍ରାଦ୍ଧ ବା ସ୍ୱନକ୍ଷତ୍ର ମାର୍ଗଶିର ଶୁକ୍ଳପ୍ରତିପଦାରେ ଏବଂ ଉକ୍ତ କ୍ଷୟମାସ ଶୁକ୍ଳପ୍ରତିପଦାର ୨ୟ ଅର୍ଦ୍ଧରେ ମୃତ ବା ଜାତବ୍ୟକ୍ତିମାନଙ୍କ ଶ୍ରାଦ୍ଧ ବା ସ୍ୱନକ୍ଷତ୍ର ପୌଷ ଶୁକ୍ଳପ୍ରତିପଦାରେ କରାଯିବ । ଗତ ୧୮୭୫ କ୍ଷୟମାସରେ ଏହିପରି ବ୍ୟବସ୍ଥା କରାଯାଇଅଛି ।

---

पाठा. 1) पंक्तिर्नास्ति- ग, भ ।

आरब्धं मलमासात् प्राक् कृच्छ्रसत्रादिकं च यत् ।
तत्समाप्यं सावनस्य मानस्यानति लङ्घनात् ॥
आरम्भस्य समाप्तेश्च मध्ये चेत् स्यान्मलीम्लुचः ।
प्रवृत्तमखिलं काम्यं तदानुष्ठेयमेव च[1] ॥
कारीर्यादि च यत् काम्यं तस्यारम्भसमापने ।
कार्ये कालविलम्बस्य प्रतीक्षाया असम्भवात् ।
अनन्यगतिकं नित्यमग्निहोत्रादि न त्यजेत् ॥
गत्यन्तरयुतं नित्यं सोमयागादि वर्जयेत् ।
'अगति ग्रहणस्नानं जातेष्टिर्गतिसंयुता ॥
द्वयं नैमित्तिकं, तस्य व्यवस्था नित्यवन्मता ।
[2]शुद्धमासमृतानां स्यान्मलिने प्रथमाब्दिकम् ।
मलमासमृतानां तु मले स्यादाब्दिकान्तरम्" ॥

(माधवाचार्यकारिका)

---

१) सर्वत्र मलमासे सगतिकं त्याज्यम् । अगतिकं काम्यमपि अनुष्ठेयम् इति सामान्यतो युक्तिः ।

२) शुद्धमासमृतानां वर्षपूर्त्तिकाले यदि मलमास आगच्छति तदा मलमासे एव सपिण्डनादिवार्षिकश्राद्धं कार्यम् । मलमासमृतानां प्रत्याब्दिकं श्राद्धं वर्षान्तरेषु शुद्धमासे कार्यम् । यस्मिन् वर्षे स एव मासः मलिनो भवति तदा शुद्धमासे न कृत्वा मलमासे एव कुर्यात् यदा शुद्धमासे मलमासमृतस्य श्राद्धं क्रियते तदा किंभूते शुद्धमासे? इति प्रश्ने मलवैशाखशुक्ले मृतस्य शुद्धवैशाखशुक्ले । पूर्णिमान्तमासानुसारिणां पक्षे मलवैशाखकृष्णपक्षे मृतस्य शुद्धवैशाखकृष्णपक्षे नतु तदुत्तरज्येष्ठकृष्णपक्षे । तत्र संकल्पवाक्ये अमुके मासि अमुके पक्षे इत्युच्चारणे मास विसम्वादात् । "मासपक्षतिथिस्पृष्टे

ସଂସର୍ପ, ଅଂହସ୍ପତି ଓ ଅଧିମାସ ଏହି ତିନମାସଯାକରେ ବିବାହାଦି-ଶୁଭକର୍ମ କରାଯିବନାହିଁ । ସଂସର୍ପ ଓ ଅଂହସ୍ପତି ଦୁହେଁ ଶ୍ରୌତ ଓ ସ୍ମାର୍ତ୍ତକର୍ମ ନିମନ୍ତେ ଶୁଦ୍ଧ । ମଳମାସ (ଅଧିମାସ)ର ନିର୍ଣ୍ଣୟ ଯଥା- ମଳମାସମଧ୍ୟରେ କାମ୍ୟ-କର୍ମର ଆରମ୍ଭ କରାଯିବନାହିଁ ବା ସମାପ୍ତି କରାଯିବନାହିଁ । ଯଦି ମଳମାସ ପୂର୍ବରୁ କାମ୍ୟକର୍ମ ଆରମ୍ଭ କରାଯାଇଥିବ ତେବେ ମଳମାସ ପରେ ତାର

## महावैशाखी

"मेषेऽर्के कार्मुके जीवे मकरस्थेऽथवा द्विजे ।
पूर्णिमा रविवारेण तुलास्थे च शनैश्चरे ॥

---

यो तस्मिन् म्रियतेऽहनि । प्र'त्यब्दं' तु तथाभूतं क्षयाहं तस्य तद्विदुः" इति क्षयाहसाधकव्यासवाक्येन मासस्याप्युक्तत्वात् । "अधिमासे विपत्तिश्चेत् सौरं मानं समाश्रयेत् । स एव दिवसस्तस्य श्राद्धपिण्डोदकादिषु" । तथा–' यस्मिन् राशौ गते सूर्ये विपत्तिं यातिमानवः । तद्राशावेव कर्त्तव्यं पितृकार्यं मृताहनि" इतिश्राद्धकल्पतरूक्तवचनाभ्यां सौरमानोपलक्षितपूर्वभाविवैशाखकृष्णपक्षे एव श्राद्धं युज्यते । अयं च सर्वदेशसमाचारः पूर्णिमान्तमासाश्रयिणाम् । एतादृशे विषये भाद्रमलकृष्णपक्षमृतस्य पूर्णिमान्तमासपक्षमाश्रित्य आश्विनकृष्णपक्षत्वेन व्यवह्रियमाणे पक्षे श्राद्धादिविधेयमिति ब्रुवन् कालसारकारः भ्रान्त एव,"मासपक्षे"ति वचनस्य "अधिमासे विपत्तिश्चेत् सौरं मानं समाश्रये"दितिवचनस्य च विरोधात् ।

ସମାପ୍ତି କରାଯିବ । ସାବନମାନଙ୍କରେ କୃଚ୍ଛ୍ର ପ୍ରଭୃତି କର୍ମ ଯଦି ମଳମାସ ପୂର୍ବରୁ ଆରମ୍ଭ କରାଯାଇଥାଏ ତେବେ ସେଠାରେ ମଳମାସ ମଧ୍ୟରେ ମଧ୍ୟ ବ୍ରତ ସମାପ୍ତ କରାଯାଇପାରିବ । ସୂତକମୃତକାଦି ଅଶୌଚ ମଧ୍ୟ ସାବନମାନରେ ଗଣିତ ହେଉଥିବାରୁ ମଳମାସ ମଧ୍ୟରେ ତାର ଶୁଦ୍ଧିସମ୍ପାଦନରେ ବାଧା ନାହିଁ । କୌଣସି ଆତ୍ୟୟିକକାର୍ଯ୍ୟ ପଡ଼ିଲେ, ଯଥା ଅନାବୃଷ୍ଟିର ପ୍ରଶମନ ନିମନ୍ତେ କାରୀରୀଯାଗ ତାହା ମଳମାସ ମଧ୍ୟରେ କରାଯାଇ ପାରିବ । ଅନ୍ୟଥା ମାସେ ଡେରିକଲେ ସମଗ୍ର ଫସଲ ନଷ୍ଟ ହୋଇଯିବ । ଏହିପରି ସମସ୍ତ ଆତ୍ୟୟିକ ଅବସ୍ଥାରେ ମଳମାସ ମଧ୍ୟରେ କାମ୍ୟକର୍ମ କରାଯାଇପାରିବ । ମଳମାସରେ ଗ୍ରହଣ ପଡିଲେ ତାହା ଅଗତିକ ହେତୁ ତହିଁରେ ସ୍ନାନଦାନାଦି କରାଯିବ । ଜାତେଷ୍ଟି ସଗତିକ ହୋଇଥିବାରୁ ମଳମାସରେ କରାଯିବ ନାହିଁ ।

ଶୁଦ୍ଧମାସରେ ମରିଥିବା ଲୋକର ପ୍ରଥମ ବାର୍ଷିକ ଶ୍ରାଦ୍ଧ ବା ସପିଣ୍ଡନ ଠିକ୍ ବାରମାସ ପୂରିଥିବା ବେଳକୁ ମଳମାସ ପଡିଥିଲେ ସେହି ମଳମାସରେହିଁ କରିବାକୁ ହେବ, ତଦ୍ଭିନ୍ନ ଅନ୍ୟମାନଙ୍କର ବାର୍ଷିକଶ୍ରାଦ୍ଧ ମଳମାସରେ ହେବନାହିଁ ।

वरीयो योगयुक्ते च विशाखर्क्षे यदा शशी ।
महच्छब्दा तदा ज्ञेया कोटिसूर्यग्रहाधिका ॥
कोटिजन्मकृतं पापं दृष्ट्वा श्रीपुरुषोत्तमम् ।
महावैशाख्यां मुञ्चन्ति स्नानं कृत्वा महोदधौ" ॥ (स्कन्दपु॰)

---

ଯେଉଁମାନେ ମଳମାସ ମଧ୍ୟରେ ମରିଥିବେ ଯଦି କେବେ ସେହିମାସ ମଳମାସରୂପେ ଆସେ ତେବେ ସେମାନଙ୍କର ବାର୍ଷିକଶ୍ରାଦ୍ଧ ଶୁଦ୍ଧମାସରେ ନ ହୋଇ ମଳମାସରେ ତାଙ୍କ ତିଥି ଅନୁସାରେ ହେବ । ଏହି ଅସଂକ୍ରାନ୍ତ ଅଧି-ମାସରେ ମୃତ ଓ ଜାତ ବ୍ୟକ୍ତିମାନଙ୍କର ଶ୍ରାଦ୍ଧ ସ୍ୱନକ୍ଷତ୍ରାଦି ପରବର୍ଷମାନଙ୍କରେ ଶୁଦ୍ଧମାସରେ କରାଯିବ । ଯଥା ମଳବୈଶାଖଶୁକ୍ଳରେ ମରିଥିବା ଲୋକର ଶ୍ରାଦ୍ଧ ବୈଶାଖଶୁକ୍ଳରେ ଓ ମଳବୈଶାଖ କୃଷ୍ଣରେ ମରିଥିବା ଲୋକର ଶ୍ରାଦ୍ଧ ବୈଶାଖ-କୃଷ୍ଣପକ୍ଷରେ କରାଯିବ । ସ୍ୱନକ୍ଷତ୍ର ଏହି ନ୍ୟାୟରେ ପାଳିତ ହେବ ।

ଏହି ବିଷୟରେ କାଳସାରକାର ଗଦାଧରରାଜଗୁରୁଙ୍କ ମତରେ ଭାଦ୍ରମଳକୃଷ୍ଣପକ୍ଷରେ ମରିଥିବା ଲୋକର ବାର୍ଷିକ ଶ୍ରାଦ୍ଧ ପୂର୍ଣ୍ଣିମାନ୍ତ ମାସର ଆଶ୍ୱିନ କୃଷ୍ଣପକ୍ଷରେ କରାଯିବ । ମୋମତରେ(ତେଜମା) ତାଙ୍କମତ ଦର୍ଶାନ୍ତମାସ ବ୍ୟବହାର କରୁଥିବା ଲୋକଙ୍କ ନିମନ୍ତେ ଠିକ୍ ମାତ୍ର ପୂର୍ଣ୍ଣିମାନ୍ତ ମାସ ବ୍ୟବହାର କରୁଥିବା ଲୋକମାନଙ୍କ ନିମନ୍ତେ ଠିକ୍ ନୁହେଁ । କାରଣ କ୍ଷୟାହ ନିର୍ଣ୍ଣୟକ "ମାସପକ୍ଷ ତିଥିସ୍ପୃଷ୍ଟେ" ବଚନରେ ମାସ ପକ୍ଷ ତିଥି ଅନୁସାରେ ଶ୍ରାଦ୍ଧଦିବସ ନିର୍ଣ୍ଣୀତ ହେବ ବୋଲି କୁହାଯାଇଛି । ତେଣୁ ଭାଦ୍ରମଳକୃଷ୍ଣରେ ମରିଥିବା ଲୋକର ଆଶ୍ୱିନକୃଷ୍ଣପକ୍ଷରେ ଶ୍ରାଦ୍ଧ କଲେ ଶ୍ରାଦ୍ଧର ସଂକଳ୍ପ ବାକ୍ୟରେ ଅଦ୍ୟ ଆଶ୍ୱିନେ ମାସି କୃଷ୍ଣେ ପକ୍ଷେ ଇତ୍ୟାଦି କହିବାକୁହିଁ ହେବ । "ଭାଦ୍ରେ ମାସି କୃଷ୍ଣେ ପକ୍ଷେ" ବୋଲି କହିହେବ ନାହିଁ । ଏଣୁ ଉକ୍ତ ବଚନର ଅବରୋଧ ହେତୁ ଭାଦ୍ରମଳକୃଷ୍ଣରେ ମରିଥିବା ଲୋକର ଶ୍ରାଦ୍ଧ ଭାଦ୍ରକୃଷ୍ଣପକ୍ଷରେହିଁ କରିବାକୁ ହେବ । ଏହି ନ୍ୟାୟ ସ୍ୱନକ୍ଷତ୍ରରେ ପ୍ରଯୁଜ୍ୟ ଅଟେ ।

## ମହାବୈଶାଖୀ

ମେଷରେ ରବି, ଧନୁ ବା ମକରରେ ବୃହସ୍ପତି ତୁଳାରେ ଶନି ଥିବା ସମୟରେ ଯଦି ବୈଶାଖପୂର୍ଣ୍ଣିମା ରବିବାରରେ ପଡ଼େ ଓ ସେହିଦିନ ବିଶାଖା ନକ୍ଷତ୍ର ଓ ବରୀୟାନ ଯୋଗ ହୋଇଥାଏ ତେବେ ତାହା ମହାବୈଶାଖୀ ସ୍ନାନ ଯୋଗ । ତହିଁରେ ମହୋଦଧିରେ ସ୍ନାନକରି ଶ୍ରୀଜଗନ୍ନାଥଙ୍କୁ ଦର୍ଶନ କଲେ କୋଟିଏ ଜନ୍ମର ପାପ ନାଶଯାଏ ।

## महाज्यैष्ठी

"ऐन्द्रे गुरुः शशी चैव प्राजापत्यगते रवौ ।
पौर्णमासी [1]गुरौ ज्यैष्ठी महाज्यैष्ठीति सा स्मृता ॥
महाज्यैष्ठ्यां तु यो गच्छेत् क्षेत्रं श्रीपुरुषोत्तमम् ।
व्रजेत् पदानि यावन्ति क्रतुतुल्यानि तानि तु[2] ॥
तत्र गत्वा हरेर्धाम्नि दृष्ट्वा श्रीपुरुषोत्तमम् ।
विश्रम्य विधिवत् स्नायात् प्रतितीर्थेषु वै क्रमात् ॥ (कूर्मपु.)

## रोहिणीप्रतिपत्

"अनुमत्यामतीतायां प्रतिपद्रोहिणी शशी ।
यदा भवति संयोगः कार्त्तिकान्ते[3] विशेषतः ॥
एवं ज्ञात्वा विशेषेण गन्तव्यं पुरुषोत्तमम् ।
कोटिस[1]न्निहितं पुण्यं स्नात्वा चैव महोदधौ" ॥ (अग्निपु.)
"[2]राकासम्पूर्णचन्द्रा स्यात् कलोनानुमतिः स्मृता ।
पौर्णमासीदिने नष्टे शशिन्यनुमतिः स्मृता ॥

---

१) सन्निहितं क्षेत्रविशेषः ।
२) चतुर्दशीयुक्तपूर्णिमायां यदा सूर्यास्तमनात्पूर्वं चन्द्रमा उदेति सा अनुमतिः, यदा सूर्यास्तकाले सूर्यास्तमनसमनन्तरं वा चन्द्र उदेति सा राका इति

### ମହାଜ୍ୟେଷ୍ଠୀ

ଜ୍ୟେଷ୍ଠାନକ୍ଷତ୍ରରେ ବୃହସ୍ପତି ଓ ଚନ୍ଦ୍ର ଥିବେ, ରବି ରୋହିଣୀନକ୍ଷତ୍ରରେ ରହିଥିବେ, ସେ ସମୟରେ ଜ୍ୟେଷ୍ଠପୂର୍ଣ୍ଣିମା ଗୁରୁବାରରେ ପଡ଼ିଲେ ମହାଜ୍ୟେଷ୍ଠୀ ସ୍ନାନଯୋଗ ହୁଏ । ତହିଁରେ ଶ୍ରୀପୁରୁଷୋତ୍ତମକ୍ଷେତ୍ରରେ ପ୍ରତିତୀର୍ଥରେ ସ୍ନାନ କରିବାକୁ ଯିବା ଲୋକର ପ୍ରତ୍ୟେକ ପାହୁଣ୍ଡ ଗୋଟିଏ ଗୋଟିଏ ଯଜ୍ଞ ସଦୃଶ ।

### ରୋହିଣୀପ୍ରତିପଦ

କାର୍ତ୍ତିକପୂର୍ଣ୍ଣିମା ପର ପ୍ରତିପଦାରେ ଯଦି ରୋହିଣୀନକ୍ଷତ୍ର ଯୁକ୍ତ ହୁଏ ତେବେ ସେ ସମୟରେ ପୁରୁଷୋତ୍ତମରେ ମହୋଦଧିସ୍ନାନ କଲେ କୋଟିଏ ସନ୍ନିହିତ୍ୟା-ତୀର୍ଥଫଳ ମିଳେ ।

---

पाठा 1) गुरुज्येष्ठा- ख । 2) वै-कृत्यकौमुदीपाठः । 3) कार्त्तिके तु-क ।

रात्रिहृष्टे पुनस्तस्मिन् सैव राकेति कीर्त्तिता" । (वृद्धवसिष्ठः)

"पूर्वोदिते कलाहीने पौर्णमास्यां निशाकरे ॥
पूर्णिमानुमतिर्ज्ञेया पश्चादस्तमितार्क[1] का ।
यदा त्वस्तमियात् सूर्यः पूर्णश्चेन्दुरुपागमत् ॥
युगपत् सोत्तरा राका तदा भवति पूर्णिमा" ॥

**महोदध्यमावास्या**

"मार्गे मासि सिनीवाल्यां सागरे यत्र कुत्रचित् ।
स्नात्वाश्वमेधावभृथस्नानस्य लभते फलम् ॥
विशाखायास्तुरीयांशे सचन्द्रे च गते रवौ ।
तथा मैत्रगते भानौ षड्गुणं [2]तत्फलं स्मृतम्[3] ॥

---

निष्कर्षः । अनयोर्निर्वचनं मत्स्यब्रह्माण्डयोः—

"यस्मात्तामनुमन्यन्ते पितरो दैवतैः सह ।
तस्मादनुमतिर्नाम पूर्णिमा प्रथमा स्मृता ।।

वायुपुराणे तु यस्मात्तामनु पश्यन्तीति विशेषः ५६–३८ । अत्यर्थं राजते यस्यां पौर्णमास्यां निशाकरः । रञ्जनाच्चैव चन्द्रस्य राकेति कवयो विदुः । इति वायुपुराणे ५६–३९ ।

मुद्रित देवीपुराणेऽपि—'पूर्वोदिते कलाभिन्ने पौर्णमास्यां निशाकरे । पूर्णिमानुमतिर्ज्ञेया यश्चास्तमितभास्करे । ३ । यस्मात्तामनुमन्यन्ते देवताः पितृभिः सह । तस्मादनुमतिर्नाम पूर्णिमा प्रथमा स्मृता । ४ । यदा चास्तमिते सूर्ये पूर्णचन्द्रस्य चोद्गमः । युगपत् सोत्तरा राका तदानुमति-पूर्विका । ५ । राकां तामनुमन्यन्ते देवताः पितृभिः सह । रञ्जनाच्चैव चन्द्रस्य राकेति कवयो ब्रुवन्' इति ४४–६ ।

ଚତୁର୍ଦ୍ଦଶୀଯୁକ୍ତ ପୂର୍ଣ୍ଣିମାକୁ ଅନୁମତି ଓ ପ୍ରତିପଦାଯୁକ୍ତ ପୂର୍ଣ୍ଣିମାକୁ ରାକା କୋହିଥାଏ ।

---

ପାଠା. 1) पश्चास्तमितभास्करा–घ, ङ, झ । 2) फलमश्नुते ख, ग, ङ, झ ।
3) तथैवेन्द्रगते सूर्ये षड्गुणात् षड्गुणं फलम्"–ख, ग, झ पुस्तकेषु अधिकः पाठः ।

सोमवारे विशेषेण सायुज्यफलदा कुहूः ।
महाज्यैष्ठ्यां च यत् पुण्यमस्यामेव हि तत्समम्" ॥ (कूर्मपु.)

या पूर्वा अमावास्या सा सिनीवाली या उत्तरा सा कुहूरिति ।

'दृष्टचन्द्राममावास्यां सिनीवालीं प्रचक्षते ।
एतामेव कुहूं प्राहुर्नष्टचन्द्रां महर्षयः" ॥ वृद्धवसिष्ठः)
"दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कुहूर्मता" । (व्यासः)

चतुर्दशीमिश्रा सिनीवाली प्रतिपन्मिश्रा कुहूः ।

## अर्द्धोदयामावास्या

"अमार्कपातश्रवणैर्युक्ता चेत् पुण्यमाघयोः ।
[1]अर्द्धोदया सा विज्ञेया कोटिसूर्यग्रहैः समा ॥
तस्मिन् काले च गन्तव्यं राजेन्द्र पुरुषोत्तमम् ।
सागरे विधिवत् स्नात्वा दृष्ट्वा नारायणं प्रभुम् ॥
कोटिजन्मार्जितं पापं नाशयेत् तत्क्षणाद् ध्रुवम् ।
स्नानं दानं तथा जप्यमक्षय्यफलभाग् भवेत्" ॥ (महाभारते)

---

ମହୋଦଧି ଅମାବାସ୍ୟା

ଚତୁର୍ଦ୍ଦଶୀଯୁକ୍ତ ଅମାବାସ୍ୟା ସିନୀବାଲୀ ଓ ପ୍ରତିପଦାଯୁକ୍ତ ଅମାବାସ୍ୟା କୁହୂ ଅଟେ । ମାର୍ଗଶିରମାସର ଅମାବାସ୍ୟାରେ ଯେକୌଣସି ସ୍ଥାନରେ ସାଗରସ୍ନାନ କଲେ ଅଶ୍ୱମେଧାବଭୃଥସ୍ନାନର ଫଳ ମିଳେ । ବିଶାଖାନକ୍ଷତ୍ରର ୪ର୍ଥ ଅଂଶରେ ରବି ଓ ଚନ୍ଦ୍ର ଏକତ୍ର ରହିଥିଲେ କିମ୍ବା ସୂର୍ଯ୍ୟ ଅନୁରାଧା(ମୈତ୍ର) ନକ୍ଷତ୍ରରେ ଥିଲେ ମଧ୍ୟ ଛଅଗୁଣ ଫଳ ମିଳେ । ତହିଁରେ ସୋମବାର ଯୋଗରେ ମୁକ୍ତିଫଳ ଓ ୧୩ ଗୋଟି ମହାଜ୍ୟୈଷ୍ଠୀର ଫଳମିଳେ ।

ଅର୍ଦ୍ଧୋଦୟାମାବାସ୍ୟା

ପୌଷ ବା ମାଘମାସର ଅମାବାସ୍ୟା ଯଦି ରବିବାର ବ୍ୟତୀପାତ ଯୋଗ ଓ ଶ୍ରବଣାନକ୍ଷତ୍ରରେ ଯୁକ୍ତ ହୁଏ ତେବେ ତାକୁ ଅର୍ଦ୍ଧୋଦୟାମାବାସ୍ୟା ବୋଲାଯାଏ ଏବଂ ତାହା କୋଟିଏ ସୂର୍ଯ୍ୟଗ୍ରହଣ ସମାନ । ଉକ୍ତ ଯୋଗରେ ଶ୍ରୀପୁରୁଷୋତ୍ତମକ୍ଷେତ୍ରକୁ ଯାଇ ମହୋଦଧିରେ ବିଧିପୂର୍ବକ ସ୍ନାନ କରି

---

पाठा. 1) अर्द्धोदयः सविज्ञेयः कोटिसूर्यग्रहैः समः- ङ ।

## पापनाशिन्येकादशी

"पुनर्वसौ देवगुरौ निशाकरे, निशेशवारेऽमरपूज्यके [1]तथा ।
कुम्भे रवौ मत्स्यगते बृहस्पता-वेकादशी स्यात् किल पापनाशिनी ॥
[1]क्षारोदके वा ह्यवगाह्य यो नरः, सम्पूज्य कृष्णं[2] रजनीमुपोषितः ।
एतेन पापं दशजन्मभिः कृतं, जेऽनीयते तस्य सहस्रमाशु[2] तत्" ॥
(ब्रह्माण्डपु)

## गोविन्दद्वादशी

'[3]कुम्भस्थे भास्करे राजन् मकरे चाङ्गिरःशनी ।
द्वादशी शुक्लपक्षस्य पुष्यर्क्षे यदि जायते ॥

---

१) क्षारोदके- महोदधौ ।
२) कृष्णं- जगन्नाथम् ।
३)सामान्यगोविन्दद्वादशी उक्ता कालसारोद्धृत विष्णुधर्मे-"फाल्गुनामलपक्षस्य बुष्यर्क्षे द्वादशी यदि । गोविन्दद्वादशी नाम महापातकनाशिनी न । चात्र पुरुषोत्तमक्षेत्रनियमः ॥ ग्रन्थोक्त गोविन्ददादशी प्रकारद्वयं बुरुषोत्तमक्षेत्रे एव । सामान्यतः फाल्गुनशुक्लद्वादश्यां गोविन्दस्य अर्च्चनप्रसिद्ध्या तस्या गोविन्दद्वादशीसंज्ञा । यथामहाभारते—
"तथैव फाल्गुने मासि गोविन्देति च पूजयन् ।
अतिरात्रमवाप्नोति सोमलोकं च गच्छति" ॥ अनुशा (१०६-६)

ଶ୍ରୀଜଗନ୍ନାଥଙ୍କୁ ଦର୍ଶନକଲେ କୋଟିଏ ଜନ୍ମର ପାପ ନଷ୍ଟହୁଏ । ସେହିପରି ଦାନ ଓ ଜପରୁ ମଧ୍ୟ ଅକ୍ଷୟଫଳ ମିଳେ ।

### ପାପନାଶିନୀ ଏକାଦଶୀ

ପୁନର୍ବସୁନକ୍ଷତ୍ରରେ ଚନ୍ଦ୍ର ଓ ବୃହସ୍ପତି ଥିବେ, ସୋମବାର ବା ଗୁରୁବାର ହୋଇଥିବ, ରବି କୁମ୍ଭରେ ଥିବେ, ତେବେ ତାକୁ ପାପନାଶିନୀ ଏକାଦଶୀ ଯୋଗ ବୋଲଯାଏ । ଉକ୍ତ ଯୋଗ ଥାଇ ବୃହସ୍ପତି ମୀନରେ ଥିଲେ ମଧ୍ୟ ପାପନାଶିନୀ ଯୋଗ ହୁଏ । ଏ ଯୋଗରେ ରାତିରୁ ଉପବାସ କରି ସମୁଦ୍ରସ୍ନାନ କରି ଶ୍ରୀଜଗନ୍ନାଥ (କୃଷ୍ଣ)ଙ୍କ ଦର୍ଶନକଲେ ଦଶଜନ୍ମର ପାପ ଲୋପହୁଏ ।

---

पाठा. 1) थवा- घ, ङ, ञ । 2) माशुभे- ग । समस्तमाशुचेत्-ङ, भ ।

गोविन्दद्वादशी नाम महापातकनाशिनी ।
तस्यां कृत्वोदधिस्नानं दृष्ट्वा च पुरुषोत्तमम् ॥
त्रयोदशमहाज्यैष्ठ्याः फलं प्राप्नोति मानवः" ॥ (ब्रह्माण्डपु.)

प्रकारा[1]न्तरेण गोविन्दद्वादशी—

"[1]फाल्गुनस्यामले पक्षे कुम्भस्थे दिवसाधिपे ।
जीवे धनुषि योगे च शोभने रविवासरे ॥
पुष्यर्क्षे यदि सम्पूर्णा गोविन्दद्वादशी स्मृता ।
गोविन्दद्वादशीं प्राप्य गच्छेच्छ्रीपुरुषोत्तमम् ॥
व्रतमापूर्य्य तत्रैव विष्णुसायुज्यमाप्नुयात् ।
महाज्यैष्ठ्या दशगुणं फलं प्राप्नोति मानवः" ॥ (तार्क्ष्यपु.)

## वारुण्यादियोगाः

"[2]वारुणेन समायुक्ता मधौ कृष्णत्रयोदशी ।

---

१) दिवसाधिपे सूर्ये, जीवे बृहस्पतौ ।

२) वारुणेन– शतभिषानक्षत्रेण । मधौ पूर्णिमान्तचैत्रमासि ।

ଗୋବିନ୍ଦଦ୍ୱାଦଶୀ

ସୂର୍ଯ୍ୟ କୁମ୍ଭରେ ଥିବେ, ଶନି ଓ ବୃହସ୍ପତି ମକରରେ ଥିବେ, ଶୁକ୍ଳଦ୍ୱାଦଶୀରେ ଯଦି ପୁଷ୍ୟାନକ୍ଷତ୍ର ଯୋଗହୁଏ ତେବେ ଗୋବିନ୍ଦଦ୍ୱାଦଶୀ ହୁଏ। ସେଥିରେ ମହୋଦଧିସ୍ନାନପୂର୍ବକ ପୁରୁଷୋତ୍ତମ ଦର୍ଶନ କଲେ ତେରଗୋଟି ମହାଜ୍ୟୈଷ୍ଠୀର ଫଳମିଳେ ।

ଅଥବା ରବି କୁମ୍ଭରେ ଓ ବୃହସ୍ପତି ଧନୁରେ ଥିବେ, ଫାଲ୍‌ଗୁନଶୁକ୍ଳଦ୍ୱାଦଶୀରେ ଶୁଭଯୋଗ ଓ ରବିବାର ପଡ଼ିଥିବ, ତେବେ ଗୋବିନ୍ଦଦ୍ୱାଦଶୀ ଯୋଗ ହୁଏ । ସେଥିରେ ପୁରୁଷୋତ୍ତମକ୍ଷେତ୍ରରେ ମହୋଦଧିସ୍ନାନ ଓ ଜଗନ୍ନାଥଦର୍ଶନାଦି ବ୍ରତ ପୂର୍ତ୍ତିକଲେ ଦଶଗୋଟି ମହାଜ୍ୟୈଷ୍ଠୀର ଫଳ ମିଳେ।

ବାରୁଣୀ

ଚୈତ୍ରମାସର କୃଷ୍ଣତ୍ରୟୋଦଶୀରେ ଶତଭିଷା ନକ୍ଷତ୍ର ପଡ଼ିଲେ ଗଙ୍ଗାରେ ବାରୁଣୀସ୍ନାନଯୋଗ ହୁଏ । ତାହା ୧୦୦ ସୂର୍ଯ୍ୟଗ୍ରହଣ ସହିତ ସମାନ ।

---

पाठा. 1) प्रकारान्तरमाह– भ ।

गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समा ॥
शनिवारसमायुक्ता सा महावारुणी स्मृता ।
गङ्गायां यदि लभ्येत कोटिसूर्यग्रहैः समा ॥
शुभयोगसमायुक्ता शनौ शतभिषा यदि ।
महामहेतिविख्याता त्रिकोटिकुलमुद्धरेत् । (स्कन्दपु.)

कुल-पुरुषः । रात्रावपि गङ्गायां वारुण्यादि स्नानं कर्त्तव्यम् ।

"दिवारात्रौ तु सन्ध्यायां गङ्गायां तु प्रसङ्गतः ।
स्नात्वाश्वमेधजं पुण्यं गृहेऽप्युद्धृत तज्जलैः" ॥ इति(ब्रह्माण्डपु.)

वचनात् ।

"महानिशा तु विज्ञेया मध्यमं प्रहरद्वयम् ।
तस्यां स्नानं न कर्त्तव्यं काम्यनैमित्तिकादृते" ॥ (देवलः)

---

अत्र नैमित्तिकपदं चन्द्रग्रहणादिपरं न योगस्नानपरमिति कालसारे । वस्तुतस्तु महानिशायां योगस्नानं न समीचीनम् । ब्रह्माण्डवाक्ये रात्रिपदम् अरुणोदयपरं तत्र सामान्यतः स्नानस्य विहितत्वात् ।

### ମହାବାରୁଣୀ

ବାରୁଣୀ ଯୋଗରେ ଯଦି ଶନିବାର ପଡ଼େ ତେବେ ମହାବାରୁଣୀ ହୁଏ । ତହିଁରେ ଗଙ୍ଗାସ୍ନାନକଲେ କୋଟିଏ ସୂର୍ଯ୍ୟଗ୍ରହଣର ଗଙ୍ଗାସ୍ନାନଫଳ ମିଳେ ।

### ମହାମହାବାରୁଣୀ

ଉକ୍ତ ଯୋଗରେ ଶୁଭଯୋଗ ପଡ଼ିଲେ ମହାମହାବାରୁଣୀ ହୁଏ । ତାହା ତ୍ରିକୋଟିକୁଳ ଉଦ୍ଧାରକରେ ।

### ସ୍ନାନକାଳ

ରାତିର ମଧ୍ୟମ ଦୁଇଟି ପ୍ରହର ମହାନିଶା ଅଟେ । ଏହି ମହାନିଶାରେ କାମ୍ୟ ଓ ନୈମିତ୍ତିକ ସ୍ନାନ କରାଯାଇପାରିବ ବୋଲି କାଳଦୀପକାର ସୂଚାଇ ଅଛନ୍ତି, ମାତ୍ର କାଳସାରକାର ଗଦାଧର ରାଜଗୁରୁ ଯୋଗସ୍ନାନ ରାତିରେ ବିଧେୟ ନୁହେ ବୋଲି କହିଛନ୍ତି । ତାଙ୍କ ମତରେ ରାତ୍ରି ପଦ ଅରୁଣୋଦୟ ପର । ବସ୍ତୁତଃ ଅରୁଣୋଦୟକାଳରୁ ସ୍ନାନ ଆରମ୍ଭ ହେଉଥିବାରୁ ଉକ୍ତକାଳଠାରୁ ଦିବାଭାଗ ମଧ୍ୟରେ ଯୋଗସ୍ନାନ ବିଧେୟ ।

## इत्यत्र महानिशायामपि काम्यनैमित्तिकस्नानं

पौषशुक्लाष्टम्यां बुधवारयोगे भद्राष्टमीस्नानयोगः पूर्वमुक्तः। सम्प्रति प्रसङ्गादपरेऽपि स्नानयोगाः प्रदर्श्यन्ते। यथा कृत्यकौमुद्यां सिंहबृहस्पतौ गोदावरीस्नानयोगः। तत्र शिवपुराणे—

"बृहस्पतिर्यदा सिंहं निमग्ने संक्रमिष्यति।
तस्मिन् क्षणे तस्य स्थाने त्वं हि पूज्या भविष्यसि॥
ततो गोदावरीवापीसंयोगे स्नानमुत्तमम्।
ये कुर्वन्ति नरा धन्या ब्रह्मलोकमवाप्नुयुः"॥ इति

ब्राह्मेऽपि– "षष्टिवर्षसहस्राणि भागीरथ्यवगाहनम्।
सकृद् गोदावरीस्नानं सिंहयुक्ते बृहस्पतौ"॥ (ब्रह्मपु. १०६-८४)

एकाम्रक्षेत्रे विशेषः उक्तः कृत्यकौमुद्याम्—

"हेलया श्रद्धया वापि यथैकाम्रवने मम।
दर्शनं कोटियज्ञानां फलदं नात्र संशयः॥
गोदावरी गोमती च कृष्णा चैव पुनः पुना।
ब्राह्मी रेवा च कावेरी ततो वैतरणी स्मृता॥
जाह्नवी च ततः प्रोक्ता ततो गन्धवहा सरित्।
इत्येता दश धाराश्च सन्ति क्षेत्रे सुरार्च्चिते॥ इति

### ଭଦ୍ରାଷ୍ଟମୀ

ପୌଷଶୁକ୍ଳଅଷ୍ଟମୀରେ ବୁଧବାର ପଡିଲେ ଭଦ୍ରାଷ୍ଟମୀ ସ୍ନାନଯୋଗ ହୁଏ

## ( ଅନ୍ୟଗ୍ରନ୍ଥମାନଙ୍କରୁ ସଂଗହୀତ ସ୍ନାନଯୋଗ )

### ଗୋଦାବରୀସ୍ନାନ

ସିଂହ ବୃହସ୍ପତିରେ ଗୋଦାବରୀରେ ସ୍ନାନକଲେ ବ୍ରହ୍ମଲୋକ ପ୍ରାପ୍ତିହୁଏ । ସିଂହବୃହସ୍ପତିରେ ଏକାମ୍ରକ୍ଷେତ୍ରରେ ମଧ୍ୟ ସ୍ନାନଦର୍ଶନାଦିଦ୍ୱାରା ପୁଣ୍ୟ ଲାଭ ହୁଏ, ଯେଣୁ ଗୋଦାବରୀ, ଗୋମତୀ, କୃଷ୍ଣା, ପୁନଃପୁନା, ବ୍ରାହ୍ମୀ, ରେବା, କାବେରୀ, ବୈତରଣୀ, ଜାହ୍ନବୀ ଓ ଗନ୍ଧବହା ଏପରି ଦଶଗୋଟି ଧାରା ସେଠାରେ ରହିଅଛନ୍ତି ।

प्रतीयते[1] ।

कृष्णास्नानयोगश्चोक्तस्तत्रैव कन्याबृहस्पतौ—

"कन्यां गते देवगुरौ कृष्णास्नानं करोति यः ।
ब्रह्महत्यादि पापानि कुलकोटिं समुद्धरेत् ॥
काबेरी तुङ्गभद्रा च कृष्णावेणी च गौतमी ।
भागीरथी च ह्येतास्तु पञ्च गङ्गाः प्रकीर्त्तिताः

तत्र सङ्गमस्नानमाह शतानन्दः—

श्रवणे सङ्गमाः पुण्याः कुरुक्षेत्रसमाः स्मृताः ।
विशेषाद् बुधसंयुक्ते तृतीयायां विशेषतः ॥ इति

विजयसप्तमीस्नानमुक्तं ब्रह्मपुराणे—

"शुक्लपक्षस्यसप्तम्यां यदादित्यदिनं भवेत् । २९/२९
सप्तमी विजया नाम तत्र दत्त महाफलम् ॥
स्नानं दानं तपो होम उपवासस्तथैव च । २९/३०
सर्वं विजयसप्तम्यां महापातकनाशनम्" ॥ इति ।

କୃଷ୍ଣାସ୍ନାନ

ବୃହସ୍ପତି କନ୍ୟାରାଶିରେ ଥିବାସମୟରେ କୃଷ୍ଣାନଦୀରେ ସ୍ନାନକଲେ କୋଟିଏ ପୁରୁଷ ଉଦ୍ଧାର ପାଆନ୍ତି ।

ସଂଗମସ୍ନାନ

ଶ୍ରବଣାନକ୍ଷତ୍ରରେ ନଦୀସଙ୍ଗମରେ ସ୍ନାନକଲେ କୁରୁକ୍ଷେତ୍ର (ବାସ) ତୁଲ୍ୟ ଫଳଲାଭ ହୁଏ । ଶ୍ରବଣା ସହ ବୁଧବାର ଯୋଗ ହେଲେ ଫଳ ଅଧିକ । ତହିଁରେ ତୃତୀୟା ପଡ଼ିଲେ ଫଳ ଆଉ ଅଧିକ ହୁଏ ।

ବିଜୟସପ୍ତମୀସ୍ନାନ

ଶୁକ୍ଳସପ୍ତମୀରେ ରବିବାର ପଡ଼ିଲେ ତାକୁ ବିଜୟସପ୍ତମୀ କୁହାଯାଏ । ତହିଁରେ ସ୍ନାନ, ଦାନ, ହୋମ, ଉପବାସପ୍ରଭୃତି କଲେ ମହାପାତକ ନାଶ ଯାଏ ।

---

पाठा. 1) "चैत्रासिते वारुणऋक्षयोगे त्रयोदशी सूर्यसुतस्यवारे ।
योगे शुभे स्यात् करणे गरश्च गङ्गाजलेर्कग्रहकोटितुल्या" ॥
इत्यधिकः– भ ।

## ग्रहणम्

पूर्णिमा प्रतिपत् सन्धौ राहुः सम्पूर्णमण्डलम् ।

---

विद्याकर वाजपेयिचरणैः स्नानयोगा उक्ता नित्याचारपद्धतौ (पृ१२३)

मन्दे चार्के गुरौ वापि वारेष्वेतेषु चैत्रिकी ।
स्नात्वाश्वमेधिकं पुण्यं लभते तत्र मानवः ॥
त्र्यहस्पृशि तिथौ स्नानं दानं च जप एव च ।
सहस्रगुणितं प्राहुरिदमेव दिनक्षये ॥ इति

महामाघी—

मेषपृष्ठे यदा सौरिर्गुरुः सिंहे च चन्द्रमाः ।
भास्करे श्रवणामध्ये महामाघीति सा स्मृता ॥

कालसारेऽपि—

"पुनर्वसुबुधोपेता चैत्रे मासि सिताष्टमी ।
तस्यां नदीषु स्नानेन वाजपेयफलं लभेत् ॥
सप्तमी बुधवारेण बुधवारेण चाष्टमी ।

ଚୈତ୍ରୀସ୍ନାନ

ଶନି ରବି କିମ୍ବା ଗୁରୁବାରରେ ଚୈତ୍ରପୂର୍ଣ୍ଣିମା ପଡ଼ିଲେ ତହିଁରେ ତୀର୍ଥସ୍ନାନରେ ଅଶ୍ୱମେଧଫଳ ମିଳେ ।

ତ୍ର୍ୟହସ୍ପୃକ୍

ତ୍ର୍ୟହସ୍ପୃକ୍ ତିଥି ବା ଦିନକ୍ଷୟରେ ସ୍ନାନଦାନାଦି କଲେ ସହସ୍ରଗୁଣ ପୁଣ୍ୟ ଲଭନ୍ତଏ ।

ମହାମାଘୀ

ମେଷପୃଷ୍ଠରେ ଶନି, ସିଂହରେ ଗୁରୁ ଓ ଚନ୍ଦ୍ର, ଶ୍ରବଣା ମଧ୍ୟରେ ରବି ରହିଲେ ମାଘପୂର୍ଣ୍ଣିମାକୁ ମହାମାଘୀ ବୋଲାଯାଏ ।

ନଦୀସ୍ନାନ

ଚୈତ୍ରଶୁକ୍ଳାଷ୍ଟମୀରେ ପୁନର୍ବସୁନକ୍ଷତ୍ର ଓ ବୁଧବାର ପଡ଼ିଲେ ତହିଁରେ ନଦୀମାନଙ୍କରେ ସ୍ନାନକଲେ ବାଜପେୟଫଳ ମିଳେ ।

ग्रसते चन्द्रमर्कं च दर्शप्रतिपदन्तरा" ॥ (वृद्धगार्ग्यः)

अङ्गारकदिने प्राप्ते चतुर्थी वा चतुर्द्दशी ।
सोमवारे त्वमावास्या सूर्यपर्वशताधिका" ॥ इति

तथा— "गुरुवारेऽप्यमावास्या अश्वत्थच्छायवारिणा ।
स्नानं प्रयागस्नानेन समं पातकनाशनम् ॥ इति

करतोयायां स्नानयोगः—

करतोयाजलं प्राप्य यदि सोमयुता कुहूः ।
अरुणोदयवेलायां सूर्यग्रहशतैः समा ॥

गङ्गायां स्नानयोगमाह व्यासः शीतातपश्च—

अमावास्यां भवेद् वारो यदि भूमिसुतास्य वै ।
गोसहस्रफलं दद्यात् स्नानमात्रेण जाह्नवी ॥
सिनीवाली कुहूर्वापि यदि सोमदिने भवेत् ।
गोसहस्रफलं दद्यात् स्नानं यन्मौनिना कृतम् ॥ इति

ମଙ୍ଗଳଚତୁର୍ଥୀ ଆଦି ସ୍ନାନ

ବୁଧବାର ସପ୍ତମୀ ବା ଅଷ୍ଟମୀ ପଡ଼ିଲେ, ମଙ୍ଗଳବାରରେ ଚତୁର୍ଥୀ ବା ଚତୁର୍ଦ୍ଦଶୀ ପଡ଼ିଲେ କିମ୍ବା ସୋମବାରରେ ଅମାବାସ୍ୟା ହେଲେ ତାହା ଶତେ ସୂର୍ଯ୍ୟଗ୍ରହଣରୁ ଅଧିକ ଅଟେ ।

ଅଶ୍ୱତ୍ଥଚ୍ଛାୟାସ୍ନାନ

ଗୁରୁବାରଯୁକ୍ତ ଅମାବାସ୍ୟାରେ ଅଶ୍ୱତ୍ଥବୃକ୍ଷର ଛାଇ ପଡ଼ିଥିବା ଜଳରେ ସ୍ନାନକଲେ, ସେ ସ୍ନାନ ପ୍ରୟାଗସ୍ନାନଭଳି ପାତକ ନାଶକରେ ।

କରତୋୟାନଦୀରେ ସ୍ନାନଯୋଗ

ସୋମବାରଯୁକ୍ତ ଅମାବାସ୍ୟାରେ କରତୋୟାରେ ସ୍ନାନକଲେ ଶତ-ସୂର୍ଯ୍ୟଗ୍ରହଣର ଫଳ ମିଳେ ।

ସହସ୍ର ଗୋଦାନଫଳଦ ଗଙ୍ଗାସ୍ନାନ

ସୋମବାର କିମ୍ବା ମଙ୍ଗଳବାରଯୁକ୍ତ ଅମାବାସ୍ୟାରେ ଗଙ୍ଗାରେ ସ୍ନାନକଲେ ଗୋ ସହସ୍ର ଦାନର ଫଳ ମିଳେ ।

[1]"ग्रस्यमाने भवेत् स्नानं ग्रस्ते होमो विधीयते ।
मुच्यमाने भवेद्दानं मुक्तौ स्नानं विधीयते ।।
"सूर्यग्रहे तु नाश्नीयात् पूर्वं यामचतुष्टयम् ।
चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विना" (स्मृति.)
[2]अपराह्णे न मध्याह्ने मध्याह्ने न तु सङ्गवे ।
भुञ्जीत सङ्गवे चेत् स्यान्न पूर्वं भुक्तिमाचरेत्" ॥ (मत्स्यपु.)
"ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत्" । (वसिष्ठः)
"ग्रस्तावेवास्तगम[1]नं रवीन्दू प्राप्नुतो यदि ॥

---

१ ग्रहणे पर्वभागे ग्रासः प्रतिपद्भागे मुक्तिः, तयोः सन्धिश्च परमग्रासकाल इति सारः ।

ग्रहणे स्नानदानादि विधीयते—"राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु । स्नानदानादिकं कुर्युर्निशिकाम्यव्रतेषु च" इति देवलवचने दर्शनपदश्रवणाद्दर्शने सति स्नानादेर्महाभ्युदयहेतुत्वाद्दर्शनमपि विधेयमिति तिथितत्त्वकृता यदुक्तं तन्न समीचीनं, तत्र स्नानादीनां विधेयत्वेन, राहुदर्शनादेस्तद्धेतुत्वेनोक्तेः । वस्तुतस्तु राहुदर्शनमत्र सूर्यसंक्रान्त्यादिवत् कालोपलक्षकं न तु दर्शनविधायकं—

"नक्षेतोद्यन्तमादित्यं नास्तं यन्तं कथं च न ।
नोपरक्तं न वारिस्थ"मिति मनुना ग्रहणदर्शनस्य निषिद्धत्वात् ।।

२ संगवे— पञ्चधाविभक्तदिवसस्य द्वितीयभागे । बालवृद्धातुरैरपि ग्रहणात् पूर्वमेकं यामम् अवश्यं न भोक्तव्यमिति भावः ।

ଗ୍ରହଣ

ପୂର୍ଣ୍ଣିମା ଓ ପ୍ରତିପଦାର ସନ୍ଧିକାଳରେ ଚନ୍ଦ୍ରଗ୍ରହଣ ତଥା ଅମାବାସ୍ୟା ଓ ପ୍ରତିପଦାର ସନ୍ଧିକାଳରେ ସୂର୍ଯ୍ୟଗ୍ରହଣ ହୁଏ । ପର୍ବ (ପୂର୍ଣ୍ଣିମା, ଅମାବାସ୍ୟା)ର ଅନ୍ତିମଭାଗ ଗ୍ରାସସମୟ ଏବଂ ପ୍ରତିପଦାର ଆରମ୍ଭଭାଗ ମୁକ୍ତିର ସମୟ ଅଟେ ।

ରାହୁ ବା କେତୁ ଚନ୍ଦ୍ରସୂର୍ଯ୍ୟଙ୍କୁ ଗ୍ରାସକରୁଥିବା ସମୟରେ ସ୍ନାନକରିବ,

---

पाठा 1) मयनं-ङ । मानं तु-ж ।

तयोः परेद्युरुदये स्नात्वाभ्यवहरेन्नरः[1]" (भृगुः)
वत्सगोत्रसमुत्पन्नो दिव्यसिंहाभिधः सुधीः ।
कालदीपाभिधं ग्रन्थं कृतवा[2]न् कृतिनां मुदे ॥

---

परेद्युरुदयकाले मेघादिदोषेण मुक्तग्रहदर्शनाभावेऽपि भोक्तव्यम् । तत्र उदयशब्देन दर्शनापेक्षया कालस्य मुख्यत्वात् । 'चन्द्रसूर्योपरागे च यावद्दर्शन-गोचर इति जाबालिवचनाद् ग्रहणं चक्षुर्ग्रहणयोग्यं सत् विधिनिषेधहेतु, न केवलं शास्त्रीयज्ञानेन गृहीतम् । तेन द्वीपान्तरग्रहणं न पालनीयम् । मेघाच्छन्नतया करणदोषाद्वा अगृहीतमपि ग्रहणं विधिनिषेधनिदानं भवति, तत्र प्रतिबन्धकाभावे ग्रहणस्य चक्षुर्ग्राह्यत्वसम्भवात् । एतेन "प्रतिबन्धका भावे सति चक्षुर्ग्राह्यत्वं ग्राह्यग्रहणस्य लक्षणमित्युक्तं भवति । तच्च स्वल्प-मपि ग्राह्यम् , न त्याज्यम् . सोमवारे चन्द्रग्रहणे सूर्यवारे सूर्यग्रहणे च निपतिते तयोः चूड़ामणिसंज्ञा भवतीति शम् ॥

ଗ୍ରାସହେବାପରେ ହୋମକରିବ, ମୁକ୍ତହେଉଥିବା ଅବସ୍ଥାରେ ଦାନକରିବ ଓ ସମ୍ପୂର୍ଣ୍ଣମୁକ୍ତପରେ ସ୍ନାନକରିବ ।

ସୂର୍ଯ୍ୟଗ୍ରହଣର ପୂର୍ବ ୪ ପ୍ରହର (ଘ୧୨ଣ୍ଟା) ମଧ୍ୟରେ ଓ ଚନ୍ଦ୍ରଗ୍ରହଣର ପୂର୍ବ ୩ପ୍ରହର ଘ୯ଣ୍ଟା) ମଧ୍ୟରେ ବାଳ, ବୃଦ୍ଧ ଓ ରୋଗୀଙ୍କ ଭିନ୍ନ କେହି ଖାଇବେ ନାହିଁ । ଉକ୍ତ ବାଳ, ବୃଦ୍ଧ ଓ ରୋଗୀ ମଧ୍ୟ ଗ୍ରହଣର ପୂର୍ବବର୍ତ୍ତୀ ପ୍ରହରକ (ଘ୩) ମଧ୍ୟରେ ଖାଇବେ ନାହିଁ ।

ଚନ୍ଦ୍ରଙ୍କର ଗ୍ରସ୍ତୋଦୟ ହେଲେ ପୂର୍ବବର୍ତ୍ତୀ ଦିନସାରା ଖାଇବ ନାହିଁ । ଚନ୍ଦ୍ର ଓ ସୂର୍ଯ୍ୟ ଗ୍ରସ୍ତାସ୍ତ ହେଲେ ପରଦିନ ତାଙ୍କର ଉଦୟପରେ ସ୍ନାନକରି ଭୋଜନ କରିବ ।

---

पाठा. 1) सर्वं गङ्गासमं तोयं सर्वे व्याससमा द्विजाः । सर्वदानसमा भूमिर्ग्रहणे चन्द्रसूर्ययोः । संक्रान्त्यां दशगुणं प्रोक्तममावास्यां शतं तथा । दिनक्षये तु साहस्रमिन्दोः कोटीरवेर्दश । गृहे त्वेकगुणं दानं गोष्ठे दशगुणं भवेत् । देवालये शतगुणं चानन्त्यं शिव सन्निधौ ।

2) चकार-ग ।

इति श्री[1]दिव्यसिंहमहापात्रविरचितः कालदीपः समाप्तः ।

ध्वन्यालोकस्यानुवादश्छाया धम्मपदस्य च ।
धर्मशास्त्रीयशब्दानां कोषश्चाशौचकारिका ॥ १

बासिष्ठधर्मशास्त्रस्य व्याख्या तत्त्वप्रकाशिका ।
सूत्रे पारस्कराचार्यकृते च मार्गदर्शिनी ॥ २

कृत्वैता विदुषां मोदहेतवे दीपवर्द्धिनी ।
टिप्पणी योजितैवात्र कालदीपे च तेजनी ॥ ३

प्रधानाचार्यवर्यस्य स्वर्गस्थस्य महात्मनः ।
गुरोरानन्दमिश्रस्य पादौ ध्यात्वा पुनः पुनः ॥

कुलपूर्वमणिर्मिश्रशर्मा शम्भुकरान्वयः ।
चिरमालोच्य शास्त्राणि टिप्पणीं कृतवानिमाम् ॥

इतिश्रीकुलमणिमिश्रशर्मकृता कालदीपटिप्पणी तेजनी समाप्ता ।

पाठा. 1) श्रीवत्सगोत्र-छ, ज । इतिश्रीत्यादिपंक्तिसमाप्त्यनन्तर वत्सगोत्रे-त्यादिश्लोकः- ङ ॥



"ख" पुस्तकस्य पृष्ठपत्रे मिछुमिश्राणां स्वहस्तलेखानुसारं
तेजनीकृतो वंशक्रमः

एकोभ्राता बडम्बायाम्, एकः नरसिंहपुरे, अन्यः विश्वेश्वरमिश्रः हलदीयायाम्

(एते त्रयो भ्रातरः पुरुषोत्तमक्षेत्र-
समीपस्थ वासुदेवपुरादागताः)

विश्वेश्वरपुत्रः यदुनाथमिश्रः
तत्पुत्रः नारायणमिश्रः
तत्पुत्रः जगन्नाथमिश्रः (१मस्त्री पुत्रः)
तत्पुत्रः यमेश्वरमिश्रः। अस्य पुत्राः

(१) धनेश्वरः (२) जीवनः (३) मुकुन्दः (४) मुरारिः (५) दीनबन्धुश्च।
धनेश्वरपुत्राः— (१) नीलाम्बरः (२) विश्वम्बरः (३) पद्मनाभः।
नीलाम्बरपुत्रौ—(१) माधवः (२) शतानन्दः (मिछुमिश्रः) च।
शतानन्दपुत्रौ (१) दामोदरः (२) श्यामश्च।

(एतत्पर्यन्तं मिछुमिश्रेण लिखितम्) श्याममिश्रस्य पुत्रः वैद्यनाथः।
तत्पुत्रः गदाधरः।
तत्पुत्रः कुलमणिः, चन्द्रशेखरश्च।

मिछुमिश्रापरनामा शतानन्दमिश्रः दानपत्रानुसारं रामचन्द्रदेव महाराजस्य १३ अङ्के ४२ अङ्केऽपि भूमिमग्रहीत्। स १२४० दिल्लीश्वराब्दे (खीः १८३३) १२५६ अब्दे (खीः १८४९) च जीवित आसीत्। खीः १८६० अब्दे जीवितः नासीत्। तस्य पिता नीलाम्बरः दिव्यसिंहदेवस्य १२ द्वादशाङ्के जीवित आसीत्।

## हलदिआ-राजवंशः

हारिद्राधिपतिः श्रीमान् जगन्नाथाभिधो नृपः।
तत्पुत्रश्चैव प्रह्लादो गोपीनाथस्तु तत्सुतः।
तस्य पुत्रश्च भगवां स्तत्पुत्रः श्यामसुन्दरः।
तत्पुत्रः कृष्णचन्द्रश्च भञ्जवंशसमुद्भवः।
पीतवासाश्च तत्पुत्रः कृतवानतियत्नतः॥
प्रासादं रघुनाथस्य तदनुग्रहकाङ्क्षया।
एतेश्लोकाः मम पित्रा लिखिताः॥

पीतवाससो वीरवरजगद्देवस्य पुत्रो रघुनाथः, तत्पुत्रः श्रीमान् नारायणभञ्जः कुशली वर्त्तते।